अग्निजिह्वाय, पश्चिमे करालाय, वायवे करालिने, उत्तरे एकपादाय, ईशाने भीमरूपिणे, ऊर्ध्वे तारकाख्याय, पाताले हाटकेश्वराय, मध्ये राजराजेश्वराय हेरकादिभ्यो बटुकादिभ्यः इह राष्ट्राधिपतिभैरवाय समस्तक्षेत्रपालयागदेवताभ्यः स्वाहा ॥ तर्पणम् । हेरकादीनि चान्यानि बटुकाश्चरिकादयः । भूपातालखदिग्व्यापी क्षेत्रेशः प्रीयतां मम ॥ अनेन० हेरकादयः क्षेत्रेशाः प्रीयन्तां प्रीता मे भवन्तु ॥ इति ऋग्वेदे क्षेत्रपालसूक्तम् ॥

## अथ सर्वदैवतसूक्तम् ।

भूतो भूतेषु चरति०—मयि पुष्टिं पुष्टिपतिर्दधातु (इत्यन्तं, ऋचः ३४ ऋ० पृ० २५–२३) नानावक्रधरा महाकृतिधराः स्रक्चन्दनालङ्कृता नानाशस्त्रधराः सिताऽसितहरिद्रक्ताम्बरधारिणः । नानाविष्टरसेविनश्च द्विचतुर्बाहून्दधानाः शुभाः सर्वे देवगणाः फलमभिमतं सन्तु श्रियं दायकाः ॥ हयोष्टौ प्रतिक्षेत्रेऽन्त्ये देवपत्न्यो द्वितीया त्रिष्टुबन्त्या च ॥ हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् । नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुर एत ऋजु नेषति ॥ १ ॥ अग्न इन्द्र वरुण मित्र

देवाः शर्धः प्रयन्त मारुतोत विष्णो । उभा नासत्या रुद्रो अधग्नाः पूषा भगा सरस्वती जुषन्त ॥ २ ॥ इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः । हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥ ३ ॥ उत नो विष्णुरुत वातो अस्त्रिधो द्रविणोदा उत सोमो मयस्करत् । उत ऋभव उत राये नो अश्विनोत त्वष्टोत विद्वाँ नु मंसते ॥ ४ ॥ उत त्यन्नो मारुतं शर्ध आगमद्दिविक्षयं यजतं बर्हिरासदे । बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं वरुणो मित्रो अर्यमा ॥ ५ ॥ उत त्येनः पर्वतासः सुशस्तयः सुदीतयो नद्यस्त्रामणे भुवन् । भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवम् ॥ ६ ॥ देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु न स्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ ७ ॥ उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्याग्नाय्यश्विनीराट् । आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ ८ ॥ ब्रह्मयादिभ्यो मातृभ्यः (पृ० ३५–४) अखण्डब्रह्माण्डयागदेवताभ्यः स्वाहा इत्यन्तं । तर्पणं । पृथिवीं द्यां चान्तरिक्षं ... । अमरा येऽवतिष्ठन्ति प्रीयन्तां ते सदा मम ॥ अनेन० सर्वे देवाः प्रीयन्तां० ॥ इति ऋग्वेदे सर्वदैवतसूक्तम् ॥

## अथ रात्रिसूक्तम् ।

शूलाब्जपाशाङ्कुशहस्तपद्मां चतुर्भुजां धूम्रनिभां त्रिनेत्राम् । सिंहासनस्थां धृत-पीतवस्त्रां ध्याये महेशीं हृदि कालरात्रीम् ॥ रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवो गायत्रम् ॥ रात्री व्यख्यदायती पुरुत्रा देव्यक्षिभिः, विश्वा अधि श्रियो-धित ॥ १ ॥ ओर्वप्रा अमर्त्या निवतो देव्युद्वतः, ज्योतिषा बाधते तमः ॥ २ ॥ निरु स्वसारमस्कृतोषसं देव्यायती, अपेदु हासते तमः ॥ ३ ॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि, वृक्षे न वसतिं वयः ॥ ४ ॥ नि ग्रामासो अविक्षत निपद्वन्तो नि पक्षिणः, निश्येनासश्चिदर्थिनः ॥ ५ ॥ यावया वृक्यंवृकं यवयस्तेन-मूर्म्ये, अथा नः सुतरा भव ॥ ६ ॥ उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थितः, उप ऋणेव यातय ॥ ७ ॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः, रात्रिस्तोमं न जिग्युषे ॥ ८ ॥ आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः । दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः ॥ ९ ॥ ये ते रात्रीनृचक्षसो युक्तासो नवतिर्नव । अशीतिः संत्वष्टा उतोते सप्तसप्ततीः ॥ १० ॥ रात्रीं प्रपद्ये जननीं सर्वभूतनिवे-

शनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥ ११ ॥ संवेशिनीं संयमनीं ग्रहनक्षत्रमालिनीम् । प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहि ॥ कालराज्यै, तालराज्यै, शिवराज्यै, राण्यराज्यै, महाराज्यै, रौद्रराज्यै, सौख्यराज्यै, धूर्भ्यः उपधूर्भ्यः, महागायत्र्यै, सावित्र्यै, सरस्वत्यै ॥ शैलपुत्र्यै १ ब्रह्मचारिण्यै २ कूष्माण्ड्यै ३ चण्डघण्टायै ४ स्कन्दमात्रे ५ सिद्धिदायै ६ महागौर्यै ७ कालराज्यै ८ महालक्ष्म्यै ९ नवदुर्गाभगवत्यै तर्पणम् । भद्रा भगवती कृष्णा तारा काली च पार्वती । मङ्गला शिवरात्री च नवदुर्गा प्रकीर्तितः ॥ अनेन० रात्रिदेव्यः प्रीयन्तां० ॥ इत्यृचि रात्रिसूक्तम् ॥

## अथ षड्तुसूक्तम् ।

चूतप्रवालरसनिर्भरमञ्जुकण्ठाः कूजन्ति कोकिलगणा गहनेषु यत्र । वैतालिका इव मनोभवबोधनाय सोऽयं वसन्तसमयः सुखदोऽस्तु मह्यम् ॥ १ ॥ वसन्ततापापगमौ सुपुष्पौ तापाधिपौ तोयकोमलौ । हेमन्तमित्रावरुणाधिपौ ये तांश्चिन्तयामि स्वगुणातिरस्यान् ॥ २ ॥ स नाऽरमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या

आहुत्याः पुरुषोऽजायत, स नाऽरमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या अश्वोऽजायत, तस्मात्पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते, इव स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या गौरजायताऽविरजायताऽजाऽजायत यवोऽजायत व्रीहिरजायतैताभ्यो वै सप्तभ्य आहुतिभ्यः सप्तेमे ग्राम्याः पशवोऽसृजन्त, स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या वसन्तोऽजायत ग्रीष्मोऽजायत वर्षा अजायन्त शरदजायत हेमन्तोऽजायत, स त्रयोदश्यामाहुत्यामुद्यतायामविभेत्तं प्रत्यङ्ङुपापद्यत तं पाणितः प्राविशत्तस्मात्पाण्योर्लोम नास्त्यग्निधानं ह्येतत्तस्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते ॥ तस्माद्धन्यमानो हस्तौ प्रति प्रगृह्णात्यग्ना इव तत्राणमिच्छतेऽग्निं वै पशवोनूपतिष्ठन्ति पशूनग्निः प्रैनं पशवो विशन्ति प्र पशून्विशति य एवं वेद तामाहुतिमप्सु प्रसिञ्चत्ततः शिशिरमजायत, तस्मात्तत्क्रूरतमं नहि तद्धुतान्नाहुतादजायत, साहुतिरपो दग्धुमुपाक्रामत, तत आपोऽग्नये वज्रोभवँस्तस्मात्प्रोक्षन्नग्निर्न प्रापयेद्यत्प्रापयेद्ध्येतेन यज्ञो तामाहुतिमोषधीषु न्यदधात्तस्मादोषधयोऽनभ्यक्ता रेभन्त ओषधिभ्योऽधिपशवः पशुभ्योधि प्रजास्तदेतच्छिशिर आज्यं श्याय-

त्यग्नये तस्माच्छिशिरे कक्ष उपादुत्याः प्रियमेव धामाग्नये प्रादात्सोऽस्मा अन्नाद्यं प्रयच्छत्यन्नादो भवति य एवं वेद ॥ १ ॥ ॐवसन्तेनर्तुना देवा वसवस्त्रिवृताः स्तुताः, रथन्तरेण भेषजा हविरिन्द्रो वयो दधुः ॥ १ ॥ ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः, बृहता यशसा बलँ हविरि० ॥ २ ॥ वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुताः, वैरूपेण विशौजसा हवि० ॥ ३ ॥ शारदेनर्तुना देवा एकविंश ऋभवः स्तुताः, वैराजेन श्रिया श्रियं हवि० ॥ ४ ॥ हेमन्तेनर्तुना देवास्त्रिणवे मारुतः स्तुताः, बलेन शक्करीः सहो हवि० ॥ ५ ॥ शैशिरेणर्तुना देवास्त्रयस्त्रिंशे-ऽमृता स्तुताः, सत्येन रेवतीः क्षत्रँ हवि० ॥ ६ ॥ २ ॥ अग्नये नमो गायत्र्यै नमस्त्रिवृते नमो रथन्तराय नमो वसन्ताय नमः प्राच्यै दिशे नमः प्राणाय नमो वसुभ्यो नमः ॥ १ ॥ इन्द्राय नमस्त्रिष्टुभे नमः पञ्चदशाय नमो बृहते नमो ग्रीष्माय नमो दक्षिणायै दिशे नमो व्यानाय नमो रुद्रेभ्यो नमः ॥ २ ॥ मरुद्भ्यो नमो जगत्यै नमः सप्तदशाय नमो वैरूपाय नमो वर्षाभ्यो नमः प्रतीच्यै दिशे नमोऽपानाय नम आदित्येभ्यो नमः ॥ ३ ॥ विश्वेभ्यो देवेभ्यो नमोऽनुष्टुभे नम

एकविंशाय नमो वैराजाय नमः शरदे नम उदीच्यै दिशे नमः समानाय नमश्चन्द्रमसे नमः ॥ ४ ॥ मित्रावरुणाभ्यां नमः पाङ्क्त्यौष्णिहाभ्यां नमस्त्रिणवत्रयस्त्रिंशाभ्यां नमः शाक्वररैवताभ्यां नमो हेमन्तशिशिराभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः ॥ ५ ॥ पृथिव्यै नमोऽग्नये नमो भूताय नमश्चक्षुषे नमोऽन्तरिक्षाय नमो वायवे नमो भव्याय नमः श्रोत्राय नमो दिवे नमः सूर्याय नमो भविष्यते नमो मनसे नमः ॥ ॐवसन्ताय, ग्रीष्माय, वर्षाभ्यो, शरदे, हेमन्ताय, शिशिराय, षड्तुभ्यः स्वाहा । तर्पणम् । वसन्तश्च तथा ग्रीष्मो वर्षाश्चैव शरत्तथा । हेमन्तः शिशिरश्चैव प्रीयन्तामृतवो मम ॥ अनेन० षड्तवः प्रीयन्तां० ॥ इति यजुषि षड्तुसूक्तम् ॥ अथोपहोमः॥ (देवासुराणाम्) तव श्रिये व्यजिहीत० (ऋ० पृ०२९–८) ऐन्द्राग्नं तावद्धुत्वा । तर्पणमेकत्र चेत्तदा । अनेन० महागणपतिः कुमारः इत्यादि (पृ० ५३–३) अनन्तादयोऽष्टौ कुलनागदेवताः ॥ उदयंस्तु महाभानुः (पृ० ६१–३) द्विजराजो महापुण्यः (पृ० ६५–८) येनार्जिता जगत्कीर्तिः (पृ० ६९–१०) बुधो बुद्धिप्रदाता च (पृ० ७४–२) मेरुमूर्ध्नि समा (पृ० ७७–३) सोमतुल्या

प्रभा (पृ० ८०–५) कृष्णवर्णः कृ (पृ० ८५–४) रक्ताक्षो धूम्रवर्णाभो ( पृ० ८८–४) अग्निपुत्रो महातेजाः ( पृ० ९०–६ ) ध्रुवराजो महापुण्यः ( पृ० ९३–१ ) अगस्त्यः कलशो ( पृ० ९५–१० ) अधोमुखस्थितो (पृ० ९७–८) हेरुकादीनि ( पृ० ९९–४ पृथिवीं द्यां ( पृ० १००–३१) भद्रा भगवती ( पृ० १०२–६) वसन्तश्च तथा ( पृ० १०५–७ ) अग्न्यादित्यौ "इत्यादि, ( पृ० ३२— ) हेरुकादयो वटुकादयः चत्वारो वेदाः साङ्गाः सायुधाः सपरिवारा यवतिलतण्डुलहोमैः प्रीयन्तां प्रीताः मे सन्तु ॥ इति यवतिलतण्डुलभागे द्वितीयः ॥ २ ॥

## अभिषेकमंत्रः ॥

एवं शान्त्यवसाने तु यजमानस्य याजकः । हृदि विन्यस्य दर्भाग्रान्स्थितान्स्वे दक्षिणे करे ॥ १ ॥ कुर्यात्प्रतिसरबद्धं तन्मे निगदतः श्रृणु । बद्धा प्रतिसरमादौ सर्वे नश्यन्तु शत्रवः ॥ २ ॥ ध्रुवस्त्वामूर्ध्वतः पातु केतुः पातु तथा त्वधः । पूर्वदक्षिणतः शुक्रो दक्षिणपश्चिमात्तमः ॥ ३ ॥ पश्चिमोत्तरतश्चन्द्रो जीवः प्रागुत्तरेण तु । उक्तसन्धिषु सर्वाणि नक्षत्राणि तवानघ ॥ ४ ॥ स्वां स्वां दिशमधिष्ठाय तव नित्यं

दिगीश्वराः । रक्षन्तु सर्वदुष्टेभ्यः शक्रवह्निपुरोगमाः ॥ ५ ॥ शात्रवानां तु घोराणां व्याधीनां पातकस्य च । अमङ्गलानां घोराणां दुरिष्टानां तथैव च ॥ ६ ॥ दुःस्वप्नानां च घोराणां चिन्तितानां तथा मृषा । वज्रेण नाशनं शक्रः करोतु बलसूदनः ॥ ८ ॥ दण्डेन नाशनं नित्यं विदधातु यमोन्तकः । पाशेन वरुणो देवो गदया च धनेश्वरः ॥ ८ ॥ ग्रहाः सन्नाहसन्नद्धा ग्रहपञ्जरमध्यगाः । अदृश्याः सर्वभूतानां सर्वदुःखविवर्जिताः ॥ ९ ॥ सर्वव्याधिविहीनाश्च कालकर्णीविवर्जिताः । तथा त्वं भव दीर्घायुर्ग्रहेन्द्राणां प्रसादतः ॥ १० ॥ रक्षन्तु ते देवगणाः समग्रं धर्मे मतिं चापि सदा दिशन्तु । नाशं तथा शत्रुगणस्य चोग्रं भोगान्मनोज्ञान्विपुलां च लक्ष्मीम् ॥ इति । अन्यच्च ॥ पुष्करो नैमिषारण्यं गङ्गाद्याः सरितस्तथा । अस्मद्दयानुरोधेन कुम्भे कुर्वन्तु सन्निधिम् ॥ १ ॥ गङ्गा गोदावरी चैव गण्डकी गौतमी तपी । यमुना चन्द्रभागा च पयोष्णी च शतद्रुदा ॥ २ ॥ आयान्तु कृपया कुम्भे सर्वतीर्थसमन्विताः । भो गङ्गे यमुने चैव गोदावरि सरस्वति ॥ ३ ॥ नर्मदे सिन्धु कावेरि कुम्भेस्मिन्सन्निधिं कुरु ॥ ४ ॥ सोविहिं देव प्रथमाय पित्रे वर्ष्मा-

णमस्मै वरिवाणमस्मै । अथास्मभ्यं सवितुर्वार्याणि दिवे दिव आसुवाभूरि पश्य ॥ भूते भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ येभिः शिल्पैः पप्रथानामऽदृह्येभिर्द्यामभ्यपिंशत्प्रजापतिः । येभिर्वाचं विश्वरूपेभिरव्ययं स्तेनेममग्न इह वर्चसा समंग्धि ॥ येभिरादित्यस्तपते प्रकेतुभिर्येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययं स्तेनेमामग्न इह वर्चसासमंग्धि ॥ आयम्भातु शिव सा पञ्चकृष्टीरिन्द्र इव ज्येष्ठो भवतु प्राजानाम् ॥ अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसो विमानम् ॥ यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानुः । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधि विश्रयेमम् ॥ व्याघ्रो वैव्याघ्रे अधि विक्रमस्व दिशो महीः । विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः । या आपो दिव्याः पयसा सम्बभूव या अन्तरिक्ष्या उत पार्थिवासः ॥ तासां त्वा सर्वासां रुचाऽभिषिञ्चामि वर्चसा । अभित्वा वर्चसा सिञ्चं स्वेन पयसा सह ॥ यथासो मित्रवर्धनस्तथा त्वा सविता करत् । इन्द्रं विश्वा अवीवृधत्समुद्रव्यचसं गिरः । रथीतमं

रथीनां वाजानां सत्पतिं पतिम् ॥ आपो हि ष्ठा० ॥ ३ ॥ हिरण्यवर्णाः शुचयः० ॥ ४ ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुशिवादयः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥२॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणा सहितो विष्णुर्दिक्पालाः पान्तु त्वां सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा कृपा शान्तिस्तुष्टिः कान्तिश्च तर्पिताः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधो जीवः सितोऽर्कजः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥ अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ ९ ॥ कृत्तिका रोहिणी देवी इल्वकार्द्रा तथैव च । पुनर्वसुश्च तिष्यश्च तथाश्लेषा च सर्वदा ॥ १० ॥ मघा

च फाल्गुणीपूर्वा तथैवोत्तरफाल्गुणी । हस्तश्चित्रा तथा स्वातिर्विशाखा च नराधिप ॥११॥ अनूराधा तथा ज्येष्ठा मूलं च यजमानकम् । पूर्वाषाढा चोत्तरा वै अषाढा स्वभिजिच्छ्रुतिः ॥ १२ ॥ धनिष्ठा शततारा च पूर्वभाद्रपदा तथा । उत्तरभद्रा रेवती च अश्विनी भरणी तथा ॥ १३ ॥ एतास्त्वामभिषिञ्चन्तु चन्द्रपत्न्यः समागताः । अनन्तश्च महानागः शेषवासुकितक्षकाः ॥ १४ ॥ सुपर्णोरश्चकुम्भश्च वामनश्चाञ्जनस्तथा । ऐलापत्रश्च शङ्खश्च कार्कोटकधनञ्जयौ ॥ १५ ॥ महाकर्णमहानीलौ धृतराष्ट्रमहाह्कौ । ऐलवतो महानागः कम्बलाश्वतरावुभौ ॥ १६ ॥ कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा । सुशरीरो दधिमुखः कालियश्चालिपिण्डकः ॥ १७ ॥ बिल्वपादः पुण्डरीको नागश्चापूरणस्तथा । कपिलश्चाम्बरीषश्च कुमारश्चापि कच्छपः ॥ १८ ॥ प्रह्लादः पुष्पदन्तश्च गन्धर्वश्च मनस्विकः । बहुषः खररोमश्च शङ्खपालश्च नागराट् ॥ १९ ॥ पद्मश्च कुलिकश्चैव कालिकादय एव च । नागास्त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ २० ॥ वेदव्यासश्च वाल्मीकिर्वसिष्ठोथ पराशरः । देवलः पर्वतश्चैव दुर्वासो भार्गवः शुचिः ॥ २१ ॥ याज्ञवल्क्यश्च जाबा-

लिर्जमदग्निः शुचिश्रवाः । विश्वामित्रस्थूलशिरा मरीच्यङ्ग्यङ्गिरास्तथा ॥ २२ ॥ पुलस्त्यः पुलहश्चैव त्रितो गौतमगालवौ । शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेद-वाहनः ॥ २३ ॥ बृहदश्वः क्रतुश्चैव जूटाधारी घटोदरः । यवक्रीतः शौनकश्च मार्कण्डेयश्च जैमिनिः ॥ २४ ॥ कात्यायनिः शार्ङ्गरवः काण्वोऽगस्त्योथ कश्यपः । एते त्वामभिषिञ्चन्तु ऋषयो ब्रह्मयोनयः ॥ २५ ॥ पृथुर्दिलीपो भरतो रघुर्दशरथो निमिः । मनुः ककुत्स्थः शत्रुजिच्छिनिश्चैव जयद्रथः ॥ २६ ॥ मान्धाता मुचुकुन्दश्च हरिश्चन्द्रः पुरूरवाः । अजश्च नहुषश्चैव ययातिरपराजितः ॥ २७ ॥ इक्ष्वाकुश्च यदुश्चैव रामो भूरिश्रवस्तथा । अम्बरीषश्चैव कुशो बृहदश्वो महाहनुः ॥ २८ ॥ प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च संशयः । एते त्वामभिषिञ्चन्तु राजानो धनवृद्धये ॥२९॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदस्त्वथर्वणः । कृतत्रेता द्वापरश्च कलिस्त्वामभिषिञ्चन्तु ॥ ३० ॥ इतिहासो धनुर्वेदो गान्धर्वश्चायुसंज्ञितः । पुराणमुपवेदाश्च विजयाय भवन्तु ते ॥ ३१ ॥ गायत्री पापशमनी दुर्गादेवी महाशिवा । गान्धारी च तथा विद्या विजयं प्रदिशन्तु ते ॥ ३२ ॥ पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा । गया

ब्रह्मसरः पुण्यं गयशीर्षं च मानसम् ॥ ३३ ॥ कालो देवो नन्दिकुण्डस्तथैवोत्तर-मानसः । गंगानदी महापुण्या ह्लादिन्यैलावती तथा ॥ ३४ ॥ तपनी च तथा सीता वङ्क्षुः सिन्धुश्च नर्मदा । सुप्रभा करतोया च विशाला गण्डकी नदी ॥ ३५ ॥ सरस्वती च यमुना सुवेणुर्विमलोदका । सिप्रा शोणः शतद्रुश्च सरयूश्चन्द्रभागिका ॥ ३६ ॥ चत्वारः सागराश्चैव स्वेन तोयेन शान्तये । सर्वास्त्वामभिषिञ्चन्तु विजयं प्रदिशन्तु ते ॥ ३७ ॥ अच्छोदश्च विपाशा च चन्द्रभागामरावती । वितस्ता देविका रम्भा कावेरी च शतह्रदा ॥ ३८ ॥ एताश्चान्याश्च सरितः सर्वलोकस्य मातरः । स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु त्वां मुदा ॥ ३९ ॥ मंत्रैर्यथोक्तैर्नृपराजराज्ये दत्वाभिषेकं पृथिवीं समग्राम् । ससागरां भुङ्क्ष्व चिरं च जीव धर्मे च ते बुद्धिरतीव चास्तु ॥ ४० ॥ इति यज्ञान्तस्नानम् ॥ ॥ अथ कलशग्रहयोः स्थापनादि ॥

श्रीदेव्युवाच । स्वामिन् ग्रहाः कस्य पुत्राः का सङ्ख्या ग्रहमण्डले । कस्मिन्देशे कश्च जातः किंवर्णश्च पृथग्वद ॥ १ ॥ शान्तिश्च कीदृशी तेषां मण्डलं पुष्पधूपकम् । कानि पात्राणि भोज्यानि कः केन परितुष्यति ॥ २ ॥ श्रीईश्वरः ॥ शृणु देवि सुतो

भानुः कश्यपस्यात्रिजः शशी । भौमो रुद्रस्य तनयो बुधश्चन्द्रमसः सुतः ॥ ३ ॥
जीवश्च ब्रह्मणः पुत्रः शुक्रो भृगुमुनेः सुतः । रवेः पुत्रः शनिश्चैव राहुः पुत्रः
प्रजापतेः ॥ ४ ॥ केतुरग्नेः सुतश्चेत्थं नव सङ्ख्यान्वितान् शृणु । सूर्यश्चन्द्रश्च
भौमश्च बुधो जीवस्तथा कविः ॥ ५ ॥ शनी राहुश्च केतुश्चेत्येकैकं बहुनायकः ।
अवतारं प्रवक्ष्यामि देशानां नामपूर्वकम् ॥ ६ ॥ जन्म भोगोऽन्नमेतेषां जन्मस्थान-
सुखानि च । योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥ ७ ॥ अर्को जातः
कलिङ्गेषु यमुनायां च चन्द्रमाः । उज्जयिन्यां भूमिपुत्रो मगधेषु बुधस्तथा ॥ ८ ॥
सिन्धुदेशे गुरुर्जातः शुक्रो भोजकटे तथा । सौराष्ट्रे च शनिर्जातो राहुर्वैराडित-
पुरे ॥ ९ ॥ केतुस्तथा मध्यदेशे जन्मर्क्षाणि शृणु ग्रहे । विशाखायां रविर्जातो
रोहिण्यामपि चन्द्रमाः ॥ १० ॥ कृत्तिकायां भूमिपुत्रः श्रवणे तु बुधस्तथा ।
पूर्वाषाढे गुरुर्जातो हस्ते जातस्तु भार्गवः ॥ ११ ॥ भरण्यां तु शनिर्जातश्चार्द्रायां
सिंहिकासुतः । केतुर्जातो मघायां तु ग्रहाणां स्वामिनः शृणु ॥ १२ ॥ रवावग्नि-
र्विधौ पाशी भौमे स्कन्दो बुधे हरिः । इन्द्रो बृहस्पतौ शुक्रे वाणी ब्रह्मा शनैश्चरे

॥ १३ ॥ राहौ गणेशः केतौ च रुद्रश्चेति मताः सुराः । ब्रह्मवर्णौ शुक्रजीवौ सूर्यभौमौ तु क्षत्रियौ ॥ १४ ॥ वैश्यौ चन्द्रबुधौ शूद्रौ राहुकेतू शन्यन्त्यजः । भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ॥ १५ ॥ पीतौ जीवबुधौ कृष्णं शनिं राहुं हरित्प्रभम् । धूम्रं केतुं शाद्वलाभो ध्रुवोऽगस्त्यः सुवर्णभः ॥ १६ ॥ अथोग्रतेजसां वक्ष्ये ग्रहाणां स्थापनं शिवे । मण्डलं सूपलिप्ते तु चतुरस्रं सुकारयेत् ॥ १७ ॥ एकं वा द्विश्चतुरष्टहस्तं वोर्ध्वमतो नहि । तिर्यक्चोर्ध्वं वेदरेखा देया मध्यस्थयोर्बहिः ॥ ॥ १८ ॥ आऽर्धकोष्ठमथैकैका कोणं नैर्ऋतिशर्वयोः । पूर्णमूर्धमधश्चाथ पूर्वेऽष्टदलमालिखेत् ॥ १९ ॥ त्रिकोणद्वयसंयोगात्पश्चाद्द्वारेशसंस्थितिः । सौम्ये ध्रुवास्पदः पक्षी याम्येऽगस्त्यस्य कुम्भकः ॥ २० ॥ मध्ये भास्करमालिख्य वह्नौ चन्द्रं तु दक्षिणे । भौमं चैशानतः सौम्यं लिखेत्सौम्ये बृहस्पतिम् ॥ २१ ॥ पूर्वे शुक्रं शनिं पश्चाद्राहुं नैर्ऋतिकोणतः । वायवे शिखिनं चैवं ग्रहाणां स्थापनं भवेत् ॥ २२ ॥ चक्राकारौ सोमसूर्यौ सौम्यजीवौ त्रिकोणकौ । चतुष्कोणौ भौमशुक्रावालोकाभः शनैश्चरः ॥ २३ ॥ यवमध्यं पताकाभं राहुं केतुं ततो बहिः । दिक्पालास्त्राणि स-

वर्णाणि लिखेत्पूर्वेण वज्रकम् ॥ २४ ॥ वह्नौ शक्तिं सुदण्डं च दक्षिणे नैर्ऋते त्वसिम् । पश्चात्पाशं ध्वजं वायौ गदां सौम्ये त्रिशूलकम् ॥ २५ ॥ ऐशान्यामथ पद्मास्त्रमूर्ध्वं चक्रमधो लिखेत् । एतान्यस्त्राणि घोराणि सर्वविघ्नोपशान्तये ॥ २६ ॥ वाडवो राक्षसेन्द्रश्च मरीचिर्दूषणः खरः । कटको देवकण्वश्च विकटो दुन्दुभिस्तथा ॥ २७ ॥ यज्ञस्य विघ्नकर्तार आगच्छन्ति दिशोदश । अस्त्रेणादिष्टमात्रेण सर्वे नश्यन्ति दूरतः ॥ ॥ २८ ॥ न मण्डलं विना सिद्धिः साधकस्य भवेत्प्रिये । पीताविन्द्रश्च वायुश्च रक्तोऽग्निः कालभो यमः ॥ २९ ॥ धूम्रो रक्षःपतिः श्वेतः पाशी पीतस्तु यक्षराट् । श्वेतः शम्भुश्च रक्तोऽजः कृष्णो विष्णुश्च वर्णतः ॥३०॥ रव्यङ्गुलं लिखेत्सूर्यं सोमं तद्द्विगुणं लिखेत् । शुक्रं नवाङ्गुलं चैव षडङ्गुलसितं गुरुम् ॥ ३१ ॥ बुधं भूमिसुतं सौरं चतुस्त्रिद्व्यङ्गुलं लिखेत् । सोमादर्धाङ्गुलं राहुं केतुमध्यर्धमङ्गुलम् ॥ ३२ ॥ शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । शनिसोमौ प्रतीच्यां च शेषा दक्षिणतोमुखाः ॥ ३३ ॥ अथवाऽदित्याभिमुखानेवेतरग्रहादीन् स्थापयेत् । समाप्ते मण्डले प्राज्ञो द्वारेशान्पूजयेत्पुरा । वायवस्त्रपेशकोणेषु गणेशस्कन्दश्रीहयान् ॥ ३४ ॥ वाणीं

लक्ष्मीं मध्यकोणे त्वष्टारमग्निकोणके । अर्घधूपादिदानेन बलिकर्म समाचारेत्॥३५॥ भास्करे करवीराणि सुमनः शशिने तथा । अशोकं मङ्गले दद्यात्किर्किराट बुधस्य हि ॥ ३६ ॥ केसराणि सुराचार्ये कुमुदं भार्गवस्य तु । नीलोत्पलं शनेर्दद्याद्राहोः पाटलपुष्पकम् ॥ ३७ ॥ अविमुक्तानि पुष्पाणि केतवे तु प्रदापयेत् । दशर्क्षगमनाभावाद्विशेषार्चा न विद्यते ॥ ३८ ॥ ध्रुवस्य कुम्भयोनेश्च पूजामात्रं प्रचक्षते । धूपं सूर्ये गुरुं चन्द्रे नमेरुं भूमिनन्दने ॥ ३९ ॥ गुग्गुलं सोमजे सर्जरसं जीवे घृताक्षतम् । शुक्रे श्रीवासकं सौरौ माहिषाक्षं समाचरेत् ॥ ४० ॥ राहोश्च पशुरोमाणि बिल्वगन्धं तु केतवे ॥ धूपं नानाविधं कृत्वा वर्णतश्चानुलेपनम् । यद्रूपं कथितं तेषां तथा तान्मनसार्चयेत् ॥ ४१ ॥ ग्रहाणां यादृशो वर्णस्तादृक्पुष्पादिनार्चयेत् । बलिं पात्रं प्रवक्ष्यामि ग्रहाणां च पृथक्पृथक् ॥ ४२ ॥ सौवर्णं भास्करे चन्द्रे रजतं भूमिजेऽग्निजम् । बुधे ताम्रं गुरौ रूप्यं शुक्रे मुक्तीयशुक्तिजम् ॥ ४३ ॥ शनौ लोहं कांस्यपात्रं राहौ केतौ तु श्रावकम् । अलाभे सर्वपात्राणां पद्मपत्रेषु दापयेत् ॥ ४४॥ तदभावे पलाशेषु तदभावे तु श्रावके । अथवा सर्वपात्रेषु सर्वेषां च विशेषतः॥४५॥

गुडौदनं रवेर्दद्यात्सघृतं पायसं विधौ । यावकं मङ्गले भक्तं दधियुक्तं बुधे शिवे ॥४६॥ क्षीरभक्तं गुरौ शुक्रे घृतभक्तं प्रदापयेत् । तिलमुद्गयुतं माषमिश्रं मांसं घृतं शनेः ॥ ४७ ॥ मांसौदनं सैंहिकेये प्रशस्तं बलिकर्मणि । लड्डुकापूपिकान्भक्ष्यान्वटकादींश्च केतवे ॥ ४८ ॥ ॐ नमो आदित्याय इत्यादिमन्त्रैः । कृत्वा बलिविधानं तु स्तुत्वा शान्तिं समारभेत् । चतुरस्रां लिखेद्वेदिं वह्निं तत्रार्चयेद्बुधः ॥ ४९ ॥ एवं कृत्वा विधानं तु समिधोत्र प्रकल्पयेत् । अर्कः पलाशः खदिरोप्यपामार्गोथ पिप्पलः ॥ ५० ॥ उदुम्बरः शमी दूर्वा कुशः सूर्यादिषु क्रमात् । आर्की गदघ्नी पालाशी कामदा खादिर्यर्थदा ॥ ५१ ॥ आपामार्गी हन्ति शत्रूनाश्वत्थी पुत्रदा मता । सुखदोदुम्बरी पापं हन्ति शामी चिरायुषे ॥ ५२ ॥ दूर्वा चैवं हि समिधः प्रमाणा द्वादशाङ्गुलाः । एकैकस्य सहस्रं वा साष्टाविंशतिकं शतम् ॥ ५३ ॥ होतव्ये मधुसर्पिर्भ्यां दधिक्षीरयुते तु द्वे । धेनुः शङ्खस्तथानड्वान्काञ्चनं पीतवस्त्रकम् ॥५४॥ हयः कृष्णा च गौः खड्गश्छागश्चेत्येषु दक्षिणा । अलाभे सर्वद्रव्याणां निःस्वः शक्त्या प्रदापयेत् ॥ ५५ ॥ पूर्णाहुतिं ततो दत्वा ग्रहांस्तत्र क्षमापयेत् । तुष्टास्तेन ग्रहाः

सर्वे शान्तिं कुर्वन्ति शाश्वतीम् ॥ ५६ ॥ इति । अथातः कलशोत्पत्तिं श्रृणु पूर्वं सुरासुरैः । कूर्मपृष्ठे तु मन्थानं मन्दारं वासुकिं गुणम् ॥ १ ॥ विधाय मथ्यमाने तु क्षीरोधावुद्गतो विधुः । लक्ष्म्यादि रत्नजातं च कलशं चामृतास्पदम् ॥ २ ॥ कलां कलां गृहीत्वा स देवानां प्रोत्थितो यतः । विष्णोः प्रभावाद्देवेशि कलशस्तेन कथ्यते ॥ ३ ॥ कलशस्य मुखे ब्रह्मा ग्रीवायां रुद्र उच्यते । विष्णुर्मूले मातृकास्तु मध्ये कुक्षौ तु सागराः ॥ ४ ॥ सप्त द्वीपा धरा द्यौश्च गंगाद्या सरितस्तथा । वेदास्तीर्थानि सर्वाणि देवाः कलशमाश्रिताः ॥ ५ ॥ मातरश्च समुद्राश्च लोकपाला ग्रहास्तथा । एते सर्वे समागत्य दुरितक्षयकारकाः ॥ ६ ॥ कुम्भं हैममयं कृत्वा रजतं ताम्रमेव वा । निर्दोषं मृण्मयं वापि पूरयेन्निर्मलाम्भसा ॥ ७ ॥ ऐशान्यां पञ्चरङ्गेन लिखेत्पद्मं वस्वस्त्रकम् । सर्वसाधारणं तत्र संस्थाप्य स्वार्चयेद्बुधः ॥८॥ एतेनामृतगर्भेण ब्रह्मणा वन्दितेन च । कलशेन समन्त्रेण यः कुर्यादभिषेचनम् ॥ ९ ॥ आयुरारोग्यमैश्वर्यं लभेत्कामान्सुशोभनान् ॥ इति । अथ ग्रहशान्तिगृहप्रतिष्ठादौ ग्रहबलिविधानम् ॥ समत्स्यमांसकृष्णमांसानपूपान्निवेदयेत् । यथा । सावित्राणि० महागणपतये० ।

भवाय देवाय० । ब्रह्मणे० । विष्णुपञ्चायतनदेवताभ्यः० ।–अष्टाभ्यः कुलनागदेवताभ्यः ॐ नमो आदित्याय ऋषिकश्यपपुत्राय अदितिगर्भसंस्थिताय रक्तवर्णसदृशाय रक्ताम्बरचीरवाससे तपसोग्ररूपधरायं भक्तिभावनाय आरुह्य मेरुं प्रदक्षिणं कृत्वा ग्रहमण्डलं प्रविश्य इत्यक्षतगन्धपुष्पधूपदीपसुवर्णरचितं बलिं निवेदयामि स्वगणैः परिवृतः प्रीतमानसो भव ऋतं ते नमः ॥ एवं प्रतिग्रहं स्वस्वभागं पृथक् २ निवेदयेत् । ॐनमः सोमाय अत्रिपुत्राय अमृतकलशसम्भूताय शुक्लवर्णसदृशाय शुक्लाम्बरचीरवाससे तपसोग्र० ॥२॥ भौ० । ॐनमोऽङ्गारकाय रुद्रपुत्राय रुद्राणीगर्भसंभूताय रक्तवर्णसदृशाय रक्ताम्बरचीरवाससे तपसो० ॥ ३ ॥ ॐनमो बुधाय चन्द्रपुत्राय रोहिणीगर्भसंभूताय पीतवर्णसदृशाय पीताम्बरचीरवाससे तपसो० ॥ ४ ॥ ॐनमो बृहस्पतये ब्रह्मपुत्राय मानसीगर्भसंभूताय पीतवर्णस ॥ ५ ॥ ॐनमो भार्गवाय भृगुपुत्राय ओषधीगर्भसंभूताय शुक्लवर्णस० ॥ ६ ॥ ॐनमः शनैश्चराय रविपुत्राय छायागर्भसंभूताय कृष्णवर्णस० ॥ ७ ॥ ॐ नमः सैंहिकेयाय प्रजापतिसुताय सिंहिकागर्भसंभूताय हरिद्वर्णस० ) ॥ ८ ॐनमः केतवे अग्निपुत्राय सन्ध्या-

गर्भसंभूताय धूम्रवर्णस० ॥ ९ ॥ ॐनमो ध्रुवाय उत्तानपात्सुताय नीतिगर्भसंभूताय रक्तवर्णस० ॥ १० ॥ ॐनमोऽगस्त्याय कलशसंभवाय शुक्लवर्णस० ॥ ११ ॥ अर्चिताश्च ग्रहाः सर्वे कल्पिताश्च विशेषतः । निवेदयेच्चरुमाज्यमेकैकस्य पृथक्पृथक्॥ ॥ १ ॥ ग्रहशान्तिदेवताभ्यो नमो नैवेद्यं निवेदयामि नमः इति ॥ अथ ग्रहादीनां क्षमापुष्पाणि ॥ अहिंसकस्य शान्तस्य न्यायार्जितधनस्य च । नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः । सू० । सिन्दूरारुणवक्त्राब्जः कर्णान्तायतलोचनः । गभस्तिमाली तिग्मांशुर्ग्रहपीडां व्यपोहतु । च० । जगदाप्यायनकरस्त्वमृताधारशीतलः । सोमः सौम्येन भावेन ग्र० । भौ० । पद्मरागनिभो यस्य देहः पिङ्गललोचनः । सोऽङ्गारकः शिवे भक्तो ग्र० । बु० । कुङ्कुमच्छविशोभेन देहेन परिमण्डितः । शिवभक्तो बुधः श्रीमान्ग्रा० । बृ० । धौतचामीकरच्छायः सर्वज्ञानालयो गुरुः । ईशानार्चारतो नित्यं ग्र० । शु० । शुक्लाम्बरधरो धीरः शुक्लमाल्यानुलेपनः । दैत्येन्द्रैः पूजितः शुक्रो ग्र० । श० । कृष्णः कृष्णाम्बरधरो नीलालिकविग्रहः । शनैश्चरः शिवे भक्तो ग्र० । रा० । नीलाञ्जननिभः श्रीमान्सैंहिकेयो महाबलः । शिवपूजापरो राहुर्ग्र० । के० । श्वेतपी-

तारुणःकृष्णः कचच्चामीकरप्रभः। शिवार्चनरतः केतुर्ग्र०। ध्रु। रक्ताम्बरधरो रक्तो ध्रुव औत्तानपादिकः। उत्तराशापतिरीशो ग्र०। आ०। मायारूपी वार्धिपायी विन्ध्याद्रिं छलयन्विभुः। घटोद्भूतस्त्वगस्त्योसौ ग्रह०॥ एते ग्रहा महात्मानो महेशार्चनतत्पराः। शान्तिं कुर्वन्तु मे हृष्टाः सर्वकालहितैषिणः॥ ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ। अपस्मारग्रहाः स्वर्गे भूपाताले ज्वरग्रहाः॥ गर्भबालग्रहा दिक्षु नानारोगग्रहाश्च ये। तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा॥ ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनादि च। भावोऽभावश्च जगतस्तस्मात्पूज्या नवग्रहाः॥ १॥ ब्रह्मस्त्वं ब्रह्मदैवत्यं ब्राह्मणस्य पितामहः। चतुर्वेदोद्भवे भूमिर्ब्रह्मन्गच्छ स्वकं गृहम्॥ ॥ २॥ शङ्खचक्रगदापाणिन्नसुराणां क्षयंकर। संसारतारणोद्युक्त विष्णो०॥ ३॥ कैलासो निलयो यस्य पूजितो यः सुरासुरैः। त्रिपुरो ज्वलितो येन शिव ग॥ ४॥ गणेश्वर त्रिनेत्रस्त्वं विघ्नभक्षोऽम्बिकासुतः। गजाननश्चाखुवाहः स्वामिन्ग०॥ ५॥ ऐरावणसमारूढः पूर्वस्यां दिशि पूजितः। वज्रहस्तः शचीयुक्तो जिष्णो ग०॥६॥ शुकारूढः शक्तिहस्तश्चाग्नेय्यां दिशि पूजितः। स्वाहाशोभितवामाङ्गो वह्ने ग०॥ ७॥

महिषासनमारूढो दण्डपाणिः प्रपूजितः । याम्यां यामीयुतार्धाङ्गो धर्म ग० ॥ ८ ॥ सिंहारूढः खड्गपाणिर्नैर्ऋतिदिशि पूजितः । रक्षःपतिर्धृतियुतो यातो ग० ॥ ९ ॥ मकरासनमारूढः पाशपाणिः प्रपूजितः । पश्चात्तु वारुणीयुक्तः स्वामिन्ग० ॥१०॥ मृगासनो ध्वजाख्यधृग्वायवे पूजितो जनैः । अञ्जनीप्राणनाथस्त्वं वायो ग० ॥११॥ नरासनो गदापाणिः पूजितश्चोत्तरे विभुः । यक्षिणीशः सखा शम्भोः स्वामिन्ग० ॥१२॥ वृषासनः शूलपाणिरैशान्यां पूजितः प्रभुः । पार्वतीप्राणनाथस्त्वं शम्भो ग० ॥ १३ ॥ हंसारूढः पद्महस्तश्चोर्ध्वायां दिशि पूजितः । गायत्रीशो जगत्स्रष्टा ब्रह्मन्ग० ॥ १४ ॥ तार्क्ष्यासनश्चक्रपाणिरधस्ताद्दिशि पूजितः । श्रीयुतः कौस्तुभाभाच्छो विष्णो ग० ॥ १५ ॥ सप्ताश्वरथसंरूढः खड्गपाणिर्ग्रहेश्वरः । शश्वत्त्रैलोक्यदीपको रवे ग० ॥ १६ ॥ क्षीरसागरसम्भूतश्शम्भोर्मूर्तौ व्यवस्थितः । अमृतांशू रोहिणीशो विधो ग० ॥१७॥ रक्ताम्बरधरः स्रग्वी रक्तमाल्यानुलेपनः । भूमिसूनुर्बालमूर्त्तिर्भौम ग० ॥ १८ ॥ पीतवर्णो महाबुद्धिः सोमपुत्रो गुणाकरः । सुप्रसन्नो महावीरः सौम्य ग० ॥ १९ ॥ विद्याः सर्वा मुखे यस्य तिष्ठन्ति च सुरार्चितः । सन्तुष्टिकृत्सुरेन्द्राणां

जीव ग० ॥ २० ॥ असुरेशगुरुः शुद्धस्फुटिकप्रतिमप्रभः । श्वेतच्छत्रो रथो यस्य शुक्र ग० ॥ २१ ॥ भ्रुकुटीकुटिलाकारः कृष्णलोहसमप्रभः । शनैर्गच्छन्ग्रहेषु त्वं शने ग० ॥ २२ ॥ शत्रुः पुष्पवतोर्नित्यं सिंहिकाप्राणवल्लभः । विष्णुः सदार्चको यस्य राहो ग० ॥ २३ ॥ ब्रह्मपुत्रो भवेद्यश्च वह्निपुत्रश्च वीरहा । त्रैलोक्यभयदो मूर्त्या केतो ग० ॥ २४ ॥ आदित्याद्या ग्रहा यस्य प्रकुर्वन्ति प्रदक्षिणम् । ध्रुवं स्थितो ब्रह्मलोके ध्रुव ग० ॥ २५ ॥ विन्ध्याद्रिश्छलितो येन घटोत्पन्नो महाशनः । इल्वलासुरभक्ष्यश्चागस्त्य ग० ॥ २६ ॥ यथा बाणप्रहाराणां कवचं वारणं भवेत् । एवं दैवोपघातानां शान्तिर्भवति वारणी ॥ २७ ॥ यथा समुत्थितं यंत्रं यन्त्रेण प्रतिहन्यते । तथा समुत्थितं घोरं सर्वं शान्त्या प्रशम्यते ॥ २८ ॥ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्ते च निर्दहन्त्येवमानिताः ॥ २९ ॥ यश्च यस्य ग्रहो दुःस्थः सतं यत्नेन पूजयेत् । इदं ग्रहाणामातिथ्यं कुर्यात्संवत्सरादपि ॥३०॥ आरोग्यबलसम्पन्नो जीवेद्वर्षशतं नरः ॥ ३१ ॥ आरोग्यं तरणिः शशी विमलतां भौमः प्रतापोदयं बुद्धिं शीतकरात्मजः सुरगुरुर्ज्ञानं सुखं भार्गवः । धैर्यं सूर्यसुतश्च

राहुरभयं केतुः प्रसादं ध्रुवः शौर्यं कुम्भसमुद्भवोऽप्यथजयं दिश्यन्तु सर्वे ग्रहाः ॥३२॥ सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः । राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं नित्यं प्रीतिकरा भवन्तु शुभदाः सर्वेऽनुकूला ग्रहाः ॥ ३३ ॥ तेजो रविः शशी कान्तिं भौमोर्थं शशिजः सुखम् । गुरुर्ज्ञानं सितः कीर्तिं शनिरायुर्ददातु नः ॥ आखण्डलोऽग्निर्भगवान्यमो वै राक्षसाधिपः । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्माप्यनन्त इत्येते दिक्पालाः पांतु त्वां सदा ॥ आयुश्च विद्यां च धनं सुखं च धर्मार्थकामं बहुपुत्रलाभम् । शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहामे प्रदिशन्तु कामान् ॥ भूतानि यान्येव वसन्ति भूतले बलिं गृहीत्वा विधिवत्प्रयुक्तम् । सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु तान्यत्र नमोस्तु तेभ्यः ॥ क्षमध्वं मम क्षेत्रेशा दधध्वं सुखसम्पदः । खभूपातालदिक्संस्थास्तुष्टा यांतु स्वकं पदम् । आह्वानं० । नमो ब्रह्मणे इति तर्पणम् । उदकलशं । मन्त्रार्थाः सफलाः सन्तु० ॥ इति ग्रहादीनां क्षमापुष्पाणि ।

## अथ ग्रहशान्तिः ।

तत्रादावश्मचूर्णेन ग्रहमण्डलमुल्लिख्य एकादश क्षेत्रपालांश्च संस्थाप्य । प्रधानं । यो रुद्रो अग्नौ० । भवाय देवाय० । स्वेष्टग्रहऋक्च । अमीवहा० ब्रह्मणे कू० तद्विष्णो० विष्णुपञ्चायतनदेवताभ्यः । क्षेत्रस्य पतिना० । पूर्वे हेरुकाय आग्नेये त्रिपुरान्तकाय दक्षिणे वेताय नैर्ऋते अग्निजिह्वाय पश्चिमे करालाय वायवे कालाक्षाय उत्तरे एकपादाय ईशाने भीमरूपिणे ऊर्ध्वे तारकाक्षाय पाताले हाटकेश्वराय । मध्ये राजराजेश्वराय । अर्चन्तस्त्वा० । यजमानमानीय । तीर्थे स्नेयं । अद्यतावत्० । महागणपतये० । भवायदेवाय० । स्वेष्टग्रहाय० । ब्रह्मणे कू० । विष्णुपञ्चायतन देवताभ्यः० । इन्द्रादिभ्यः० । पूर्वेहेरकाय० । धूप दीपः ॥ दक्षिणान्तं । अथाग्निकर्म । पात्रं तिला० अमुककर्मनिमित्तं जुष्टं निर्वपामि एवं प्रोक्षामि । आज्यभागान्तं कृत्वा । समिद्धोमः । आदावेकचक्रे ( पृ० ३६–१ ) तेजोसि । अग्निर्हिरण्यं–सोमो हिरण्यमिति च द्वे हुत्वा । एकचक्रमुदयादित्यष्टादश हुत्वा । ध्यानं । निषुसीद गणपते: । एवमन्नहोमं । ते० । एकचक्रादि हुत्वा ॥ पञ्चूपहारो यथा ।

पूर्वाभिमुखं पशुं पश्चिमाभिमुखं यजमानं संस्थाप्य । पवित्रं विना शौचादि विधाय । येषां मेष: पर्वपतिः पशूनां चतुष्पदा उत ये द्विपदाः । विक्रीतास्ते याज्ञिकं भागं सन्तु रायस्पोषं यजमानं संविशन्तु इति मांसशोधनमन्त्रः ॥ पशुपाशाय विद्महे । महापाशाय धीमहि । तन्नः पशुः प्रचोदयात् ॥ ३ ॥ रुद्राय ( वा अजाय ) पशवे पाद्यादि । पवित्रं धृत्वा । दक्षिणान्तं । बन्धार्थं बन्धनस्थोसि मोक्षार्थं मोचितो मया । देवप्रीत्यै समुत्पन्नः स्वर्गं गच्छ पशो स्वयमिति पठित्वा । दक्षिणबाहोर्धृतेन स्पर्शनम् । ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि अमुष्मै देवाय जुष्टं निर्वपामि । ततः पशुपृष्ठे तर्पणम् । अद्य तावत् महागणपतये० ब्रह्मणे० पूर्वे हेरुकाय० अमुककर्मनिमित्तमिमं पशुमपर्यामि नमः ॥ अथ दक्षिणकर्णे मन्त्रः ॥ न वै त्वं म्रियसे न मरिष्यसि आं इदेषि स्वर्गं लोकं पथिभिः सुगेभिः । रुद्राखुं ते पशुं करोमीति (पृ० ८९–९०) सूक्तं पठेत् । यावन्न कम्पयदेहं तावन्नैवोपघातयेत् । नवश्राद्धके क्षेत्रेशार्थं रक्तं । लवणहारिद्राभिः पचित्वाऽङ्गाणि च ग्राह्याणि ॥ विप्राय दक्षिणपादयुतं शिरः किञ्चिद्दाहयुतं सावित्राणीति निवेद्यम् ॥ ( पृ० ) ग्रहेभ्यः सपुरोळाशेन कृष्णमांसेन बलिः ।

**योगिनीभ्यः** वैश्वदेवावसरे हृत्कमलं वलिः ॥ इति शिक्षा । तत एवमाज्यहोमः **एन्द्राग्नं** विना । आदौ **आदित्यस्तेजस्वी**ति (पृ०) ग्रहवलिः। तत **एकचक्रे आदित्यस्तेजस्वी तेजोऽस्मि-न्नि**त्युपहोमान् आज्ये मुखं वीक्ष्यन्स्रुवेण जुहोति । **आदित्या रुद्रा०** ( पृ० ३९–४ ) इति ग्रहेष्टब्राह्मणं । **अग्नेर्देवाँ इहावह** ( पृ० ४२–६ ) इति नक्षत्रयज्ञं च हुत्वा । ते० । ऐन्द्राग्नं । तर्पणं । **अनेन ग्रहशान्तिनिमित्तं महागणपतिः० समिदन्नाज्याहुतिभिः प्रीयन्तां प्रीता सन्तु ॥ ॐकारो यस्य मूलं** ( पृ० १–१ ) पृथक् २ तर्पणयुक्तानि वहसूक्तानि पञ्चकत्रयं रक्षोघ्नमन्त्राणि च हुत्वा ॥ वैश्वदेवे **आकाशमातृणां** वलिः । **ब्रह्माणी कमलेन्दुपूर्णवदना माहेश्वरी लीलया कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी । वाराही वनघोरघुर्घुरमुखी ऐन्द्री च वज्रायुधा चामुण्डा गणनाथसिद्धसहिता रक्षन्तु त्वां मातरः ॥** गोग्रासादि । अत्र ग्रहाणां क्षमापुष्पाणि । **अहिंसकस्ये**ति ( पृ० १२०–५ ) **उदकलशं** ( पृ० ) अथ अभिषेकः । **एवं शान्त्यवसाने तु** ( पृ० १०६–१ ) मन्त्रार्थः । इति ग्रहशान्तिविधानम् ॥

## अथ गण्डान्तादिशान्तिः ।

सर्वेषां मूलजातानां परित्यागो विधीयते। ताते–नादर्शयेच्चापि यावत्षण्मासपूरणम् ॥ अस्य गण्डान्तादिदोषनिवारणार्थं पयःस्नानादि । उक्तं च । शतौषधीमूलमृदम्बुरत्नसद्बीजगर्भैः कलशैः समन्त्रैः । कुर्याज्जनित्रीपितृबालकानां स्नानं शुभार्थं सह होममन्त्रैः ॥ कुंकुमं चन्दनं कुष्ठं गोरोचनसमन्वितम् । घृतेन मिश्रितं कृत्वा चतुर्भिः कलशैस्ततः ॥ २ ॥ सहस्रशीर्षामन्त्रेण बालकं स्नापयेद्बुधः । पितृयुक्तं दिवाजातं मातृयुक्तं च रात्रिजम् ॥ ३ ॥ सन्ध्ययोरुभयोः सत्यं वदत्येवं बृहस्पतिः । कांस्यपात्रं घृतैः पूर्णं देयाद्गण्डोपशान्तये ॥ ४ ॥ आश्लेषायां च मूले च शान्तिरेवं विधीयते । कृष्णां धेनुं सुवर्णं च ग्रहजाप्यं च कारयेत् ॥ ५ ॥ शकृन्मूत्रं च सङ्गृह्य श्वेतस्य वृषभस्य च । श्वेतगोः पयसा सार्धं स्नातव्यं तीर्थवारिणा ॥ ६ ॥ मूलनक्षत्रपीडायां तस्माद्दोषाद्विमुच्यते । मुरा ( छर ) मांसी वचा कुष्ठं शैलेयं ( वटफटो ) रजनीद्वयम् ॥ ७ ॥ शुण्ठी चम्पक ( सुङ्गोल ) मुस्ता च सर्वौषधिगणाः स्मृताः ॥ अन्यच्च । सहदेवी ( एटमिट । चा । बूथ ) अतिमोधः ( कामयमूल ) विष्णुक्रान्ता

( वाश । वा । हमील ) पुनर्नवा ( साण्ठ ) शरपुङ्खः ( भोडरकोन वा थोर । काकजङ्घ ।) कावखुर ) सुलक्षणा ( दुदूज्य ) अश्वगन्धः ( हसेमद ) पुंनाग नागकेसर । सद्भर्ग ( जाफूर ) मधूक ( शंघूर )। श्रीपर्ण ( विलपत्र ) शमीपत्र ) वेतसीपत्र । प्लक्षपत्र ( वनमुस्त ) औडम्बर ( डलमसाल ) अश्वत्थ ( पीपल ) शतपत्र ( पम्पुष ) जाफल । पलाशपत्र । अतसी । भङ्गा । विजया । जयन्ती । श्रीपर्णी । कुन्दपुष्पं । सुनपुष्पं । आमोलं । शतावरी । कुशा, तुलसी, काशमूलं, भूतजटा, इक्षुमूलं, सर्षपमूलं, यवामूलं, सर्वौषधी ॥ मृत्तिका, राजद्वारात्, वल्मीकात्, महानद्याः तटयोः, गोगृहात्, अश्वस्थानात्, गजस्थानात्। चतुष्पथात्, वृक्षमूलात्, तीर्थात् ॥ पञ्चरत्नं, कर्पूरं, पञ्चगव्यं । एते पञ्चकलशेषु निक्षिपेत् पञ्चगव्येन मण्डपशुद्धिं विधाय आदावश्मचूर्णेन गृहमण्डलं तदक्षे सिन्दूरयुतपिष्टेन पद्मचतुष्कं तेषां मध्ये चतुर्विंशतिदलं पद्मं संलिख्य, तदक्षे गोदानार्थं वेदचतुष्टयपद्मानि संस्थाप्य ॥ इमं मेवरुणेति कुम्भेषु जलं । याः फलिनीति फलानि, या ओषधय इति औषधयः, काण्डात्काण्डेति शरारोपः । योगे योगेइति रक्तकर्पटं ( सोल ) बध्नी-

यात् । राक्षसानां तिलकार्थं रक्तचन्दनं सुरार्थं सैन्धवयुतं क्षीरं, मांसार्थं लवणयुतं पायसं कल्पयेत् ॥ प्रधानं । कलशे तद्विष्णोः । वासुदेवाय ८ । तदनु । पूर्वकुम्भे । अप्रतिरथं मम तस्य तमोपहनं व्यावृतस्य पात्मना । सर्वाणि तस्मिञ्ज्योतींषि यानि त्रीणि प्रजापतौ १ ऐन्द्राग्नं २ निरहावक्रूणोतु न संवरत्नं ददातन, सिञ्चामहा अवतं मुद्रिणं वयं, सुषेकमनुपक्षितं । वष्कृताहवमवत संवरत्रं सुषेचनं उद्रिणं सञ्चिरक्षितम् ३ इन्द्राय, यातवे, रक्षसे, अस्रपाय, वरदाय । दक्षिणे । रथवाहनं हविरस्य नाम, यत्रायुधं नियुतस्य वातम् । तत्रारथमुपशग्मं सदेम, विश्वावर्यं सुमनस्यमानः १ मुञ्चामि त्वा. २ । रात्रिचराय, आशराय, कौणपाय, धर्मराजाय । पश्चिमे । प्रतिरथं मिथूकृतमिन्द्रो वातजिष्णुना । अस्मिन्नाजौ पुरुहूत श्रावये धनं भक्षेधनो व १ रक्षोहणं २ कर्बुराय, निकषात्मजाय, रात्रिञ्चरेभ्यः । उत्तरे । उत्सवातो वहति वासो अस्या अधिरथं यदजयत्सहस्रम् । रथीरभून्मुद्गलनीगविष्टो गभरेकृतं व्यदेशमं सेना १ ईशानात्त्वा २ यक्षेभ्यः, राक्षसेभ्यः, समस्तरात्रिञ्चरेभ्यः मध्ये । मूलायां । यन्ते देवी । अश्लेषायां । नमो अस्तु सर्पेभ्यो ।

ॐ गायत्र्यै नमः २ जातवेदसे ३ त्र्यम्बकं ४ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्, धीरा देवेषु सुम्नया ५ निरहावक्णोतु न संवरलं ददातन । सिञ्चामहा अवतं सुद्रिणं सुषेकमनुपक्षितम् । यङ्कृता हवमवत संवरलं सुषेचनं उद्रिणं सिञ्चरक्षितम् ६ अग्निस्तु ७ तामग्निवर्णां ८ अमीवहा ९ कृणुष्व पञ्चोना रक्षो० १५ ( पृ ) क्षेत्रस्य पतिना । गणानान्त्वा । अग्निर्दूतं वृणीमहे होतारं विश्ववेदसं, अस्य यज्ञस्य सुक्रतुम् । पुरुषसूक्तं १६ (पृ ०१–९ ) लक्ष्मीसूक्तं ( पृ० ९–२) ततो मध्यकुम्भस्य । दक्षिणे । ज्येष्ठदैवतं, इन्द्राय । मध्ये । मूलदैवतं, नैर्ऋतये । उत्तरे । पूर्वाषाढदैवतं, अद्भ्यः । ततः पूर्वादिक्रमेणोत्तराषाढादिदैवतानि ईशानान्तं नक्षत्रयज्ञोक्तैर्मन्त्रैः (पृ०४२–१२) पूजयेत् । तथाहि । विश्वेभ्यो देवेभ्यः उत्तराषाढाभ्यः, विष्णवे अश्वत्थाय, वसुभ्यः; वरुणाय, अजैकपादेभ्यः, अहिर्बुध्न्याय, पूष्णे, अश्विन्यां यमाय, अग्नये, प्रजापतये, सोमाय, रुद्राय, अदितये, बृहस्पतये, सर्पेभ्यः पितृभ्यः भगाय, अर्यम्णे, सवित्रे, त्वष्ट्रे, वायवे, इन्द्राग्नीभ्यां, मित्राय, नैर्ऋतये "मूलनक्षत्राय" वा "आश्लेषानक्षत्राय" सर्वेभ्यो राक्षसेभ्यो नमः ॥ ततः पञ्चायतनदेवताभ्यः ॥

अथ यजमानमानीय ॥ महागणपतये वासुदेवाय ८ नैर्ऋतये रक्षोधिपतये मूल-नक्षत्रदेवतायै, सर्पेभ्यो राक्षसेभ्यो यातवे रक्षसे अस्रपाय, वरदाय इन्द्रकुम्भ-देवताभ्यः । रात्रिञ्चराय, आशराय कौणपाय, धर्मराजाय, धर्मराजकुम्भदेव-ताभ्यः । कर्बुराय, निकषात्मजाय, रात्रिञ्चरेभ्यः वरुणकुम्भदेवताभ्यः । यक्षेभ्यः राक्षसेभ्यः, यातुधानेभ्यः, धनदाय, धनदकुम्भदेवताभ्यः । मध्ये । गायत्र्यै ३ अमायै ८ भवाय देवाय ८ वास्तोष्पतये, वरुणाय, ज्येष्ठायै, पूर्वाषाढायै, उत्त-राषाढायै, श्रवणाय, धनिष्ठायै, शतभिषजे, पूर्वभाद्रपदायै, उत्तरभाद्रपदायै, रेवत्यै, अश्विन्यै, भरण्यै, कृत्तिकायै, रोहिण्यै, मृगशिरसे आर्द्रायै, पुनर्वसवे, तिष्याय अश्लेषायै मघायै पूर्वफाल्गुन्यै उत्तरफाल्गुन्यै, हस्ताय चित्रायै स्वात्यै, विशाखायै अनूराधायै मूलनक्षत्राय । पञ्चायतनदे० दीपधूपः ॥ ॐ गायत्र्यै नमः ३ विष्णुगायत्रीः सर्वाः । अद्य तावत् । आत्मनः सकुटुम्बस्य सबालकस्य मूला-दिजातदोषनिवारणार्थं मूलप्रतिमापू० कलशपू० दिक्कुम्भयुतौषधिकुम्भपू० चतु-र्वेदेश्वरपू० क्षेत्रेश्वरपूजनमर्चामहं करिष्ये । आवाहनं प्रतिमायाः । आगच्छागच्छ

दिक्स्वामिन्नैर्ऋते खड्गपाणिक । सर्वलोकेश सर्वज्ञ शरणागतवत्सल १ रक्षोधिप महाप्राज्ञ सर्वलोकनमस्कृत । मूलनक्षत्रजन्मोत्थं यद्दोषं दिक्पते मम २ पत्न्या वापि सुतस्यापि तत्सर्वं नाशय प्रभो । अद्य त्वमावयोर्देव रक्षां कुरु सपुत्रयोः ३ त्वदन्यं नैव पश्यामि कृपालुं हितकारकम् । अतस्त्वां शरणं यामि पत्नीपुत्रसमन्वितः ४ तथा कुरु यथा देव न बाध्यन्ते ग्रहा मम । देवमावाहयिष्यामि मूलभं दारुणं महत् ५ खड्गपाणिं महौजस्कं सर्वसौख्यकरं परम् । नीलवर्णो० ६ आवाहयामि नैर्ऋतिंशशिखण्डमौलिं पूजापरं च सृणिखड्गकरं च दक्षे । वामे च खेटकसुपाशसमन्वितं तं वृषासनस्थितमहं मखरक्षणार्थम् । यन्ते देवी० । रक्षोधिपतये मूलनक्षत्रदेवतायै नैर्ऋतये नम इति प्रतिमाशिरसि पुष्पं दद्यात् । भगवन्पु० । सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् । पायसं लवणोपेतं मांसस्थाने तु रक्षसाम् १ तथैव निवेद्य । दक्षिणान्तं ॥ अग्निकर्म ॥ चरुद्वयं पायसं अन्नं च । आदौ समिद्धोमे । यन्ते देवी १०८ ततः पायसे । त्वं नः सोमेन विश्वतो रक्षराज नुगाहिता, न रिशीतावता सखा १०८ या ते रुद्र शिवा तनू १०८ इति च हुत्वा ततोन्ने यन्ते देवी १०८ एवमाज्यहोमादि पूर्णां तावत् गोप्रदानं ।

ब्राह्मणपूजा । कुम्भानां प्रतिमायाश्च विसर्जनम् । इन्द्रकु०, धर्मकु०, वरुणकु०, धनदकुम्भदेवतापू० सनक्षत्रदेवतामूलनक्षत्रदेवप्रतिमापूजनमच्छिद्रं ॥ आपःस्नोस्मि । अद्य मे रक्षसां नाथ सर्वलोकनमस्कृत । खड्गपाणे महौजस्क प्रीयतां मम नैरृते । आह्वानं । ततो भद्रपीठोपरि पत्नीपुत्रसमन्वितं कुम्भानां मन्त्रितं जलं मध्य-कुम्भे निक्षिप्य तेनैव शतधारोदकेन (क्रंज्यलेस मंज) प्रधानमन्त्रैः (पृ१३०–१) सावीर्हिदेव (पृ १०७–१३) पावमान्यब्राह्मणं (पृ) योसौ वज्रधरो देवो महेन्द्रो गजवाहनः । शक्रो मम शिशोर्दोषं (मूल । गण्ड) सर्पजोत्थं व्यपोहतु १ योसौ शक्तिधरो देवो वृषभुग्मेषवाहनः । अग्निर्मम २ योसौ दण्डधरो देवो धर्मो महिषवाहनः । यमो मम० ३ योसौ खड्गधरो देवो नैरृती राक्षसाधिपः । क्रव्यान्मम० ४ योसौ पाशधरो देवो नक्रवाहो जलेश्वरः । पाशी मम० ५ योसौ ध्वजधरो देवो जगत्प्राणो मृगासनः । वायुर्मे० ६ योसौ गदाधरो देवो निधीशो नरवाहनः । कुबेरो मे० ७ योसौ शूलधरो देवः पिनाकी वृषवाहनः । ईशानो मे० ८ योसौ पद्मधरो देवो विधाता हंसवाहनः । ब्रह्मा मम० ९ योसौ चक्रधरो देवो व्यापकस्तार्क्ष्यवाहनः । विष्णुर्मे० १० योसौ मुखं देवतानां सप्तार्चिरमितद्युतिः । वह्नि-

र्मम० ११ योसौ कर्माकर्मसाक्षी लोकानां महिषासनः । धर्मोम० १२ विघ्नेशाः क्षेत्रपालाश्च लोकपाला नवग्रहाः । सर्वे म० १३ इति वस्त्रान्तरितकुम्भाभ्यां पश्चात्तु स्नापयेद्बुधः । ततः शुक्लाम्बरधरो यजमानोर्चयेद्द्विजान् इति ॥ कांस्यपात्रस्थिते घृते आज्यदर्शनं । यथा । आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् । आज्यं सुराणा-माहारमाज्ये लोकाः प्रतिष्ठिताः । तत्सद्ब्रह्म० पत्नीसुतकुटुम्बलक्ष्मीसहितस्य ग-ण्डान्तादिदोषनिवारणार्थमाज्यं परिकल्पयामि नमः इति छायापात्रं ॥ तदनु घृत-पात्रसहितं कुम्भपञ्चकं मूलप्रतिमां च प्रतिपादयेत् । सावित्राणि० सकुटुम्बस्य गण्डा-न्तादिदोषनिवारणार्थं मध्यकुम्भोपरि इमां निर्ऋतिप्रतिमूलप्रतिमां सहिरण्यां स-वाससं सान्नां घृतपात्रसहितां ददानि २ प्रतिगृह्णामि ३ क इदं० । एता देवता० ब्राह्मणपृच्छां विसर्ज्य । पूर्णां दत्वा वैश्वदेवादि ॥ इति गण्डान्तादिशान्तिः ॥

## अथ वेश्मप्रतिष्ठाविधानम् ।

ईशाने भूमिमधो द्व्यङ्गुलं खादित्वा गोमयेन पञ्चगव्येन संशोध्य । तत्र । गृहवास्तुनि सम्पूज्या पदैकाशीतिसंख्यया । तिर्यगूर्ध्वं विंशरेखाभूता त्रिपदषट्पदा । हस्तद्व-

यप्रमाणेन विस्तरायामतः समाः ॥ आदावश्मचूर्णैनकाशीतिपदं वास्तुयागमुल्लिख्य तत्कोणेषु काण्डात्काण्डादिति शरान्पञ्चरङ्गसूत्ररक्तवस्त्राभ्यामुपरि संस्कृतान् संकीर्य । शराणां निकटे कलशान् ईशानतोबहिः । क्षेत्रपालाष्टकं वास्तोर्दक्षिणतो मातृकार्थं देवतवारिकादि तद्दक्षिणतो ग्रहमण्डलं तद्दक्षे एकादश क्षेत्रपालान् संस्थाप्य ॥ प्रधानं । ब्रह्मकलशे । अमीवहा॰ ब्रह्मणे नमः॰ । ८ । अक्षोटसप्तकेषु । ब्रह्मादेवानां॰ । ब्राह्म्यै, माहेश्वर्यै, कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै ॥ ७ ॥ घृतधारासप्तसु ॥ गौरीर्मिमाय॰ ॥ गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै ॥ ७ ॥ नैरेंगिकादेवतासप्तसु । टिंकूपूच । देवसेनायै सुधायै स्वाहायै मातृभ्यः लोकमातृभ्यः घृत्यै तुष्ट्यै ८ स्वात्मने । जातवेदसे॰ ॥ पुष्ट्यै आत्मदेवतायै २ । देवतमूनशाखासप्तसु । ये के च ज्मा॰ ॥ ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगायै भगाक्ष्यै ७ भक्तगोलिकासप्तसु । राकामहं॰ ॥ अनुमत्यै राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वैश्वर्यै अनेश्वर्यै ७ । [illegible] वसु॰ ॥ एकान्तवासिन्यै । गणानां त्वा॰ । क्षेत्रस्य पतिना वयं॰ ॥ दुर्गाक्षेत्रगणेश्वरदेवताभ्यः मातृमण्डलयागदेव-

ताभ्यः ॥ तद्विष्णोः० पञ्चायतनदे० यत इन्द्र० । क्षेत्रस्य पतिना वयं० पूर्वे हेरकाय अग्नेये त्रिपुरान्तकाय । दक्षिणे वेतालाय । नैर्ऋते अग्निजिह्वाय । पश्चिमे करालाय । वायवे करालिने । उत्तरे एकपादाय । ईशाने भीमरूपिणे । ऊर्ध्वे तारकाख्याय । पाताले हाटकेश्वराय । मध्ये राजराजेश्वराय । ततो देवतवारिकायां । पुनर्ब्रह्मादे० वानामित्यादि । वास्तोरीशानादारभ्य ॥ आवो राजानं० । ईशानाय नमः ॥ १ ॥ पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे, स नो यवसमृच्छतु । पर्जन्याय ॥ २ ॥ जयतामिव तन्यंतो मारुतामिति धृष्णया, यच्छुभं याथनानरः । जयन्ताय ॥ ३ ॥ ३–२ द्विपदेयाः त्रातारमिन्द्रं० । इन्द्राय ४–२ सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्, अग्निर्नः पार्थिवेभ्यः । सूर्याय ५–२ सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः । सत्याय ६–२ नासत्याभ्यां बर्हिरिव प्रवृञ्जे स्तोमामियन्त्यभ्रियेव वातः । यावर्भगाय विमदाय जायांसेनाजुवान्युहथुरथेन । भृशाय ७–२ हंसः शुचिष० आकाशाय ८ इत्यष्टौ पूर्वे ॥ अग्निमीळे० अग्नये ९ पूषा राजानमाघृणिरपगूढं गुहा-

हितम्, अविन्दच्चित्रबर्हिषम् । पूष्णे १० मानो मित्रो वरुणो अर्यमायुरिन्द्रा ऋभुक्षा मरुतो जुषन्त । मनोभिर्वाये ददाथे सुवृक्तं सोमं रुद्राय मीढुषे सजोषाः॥ वितथाय ११–२ गृहङ्गृहमहनायात्यच्छा दिवे दिवे अधि नामादधाना । सिषासन्ती द्योतना शश्वदागादग्रदग्रमिद्भजते वसूनाम् । गृहक्षताय १२–२ त्रिकद्रुकेभिः० यमाय १३–२सोमो ददद्गन्धर्वाय गन्धर्वोददद्ग्नये । रयिञ्चपुत्रांश्चादादग्निर्म- ह्यमथो इमाम् । गन्धर्वाय १४–२ एकस्य वास्तुरावत व्रणाय वसमश्विनासनायि सहस्रा । निरहतं दुच्छुना इन्द्रवन्तः पृथुश्रवसो वृषणवरातीः । भृङ्गिराजाय १५–२ मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परास्याः । सृकं संशाय पविमिन्द्रतिग्मं विशत्रून्ताढि विमृधो नुदस्व । मृगाय १६ इत्यष्टौ दक्षिणे । मनोन्वाह- वामहे नाराशंसेन स्तोमेन, पितॄणां च मन्मभिः । पितृगणाय १७ वनस्पते शत- वल्शं विरोह सहस्रवल्शा वि वयं रुहेम । यन्त्वायं सुधितिस्तेतिजानः प्रणिनाय महते सौभगाय । दौवारिकाय १८ आमो गृहा [illegible] प्रजाम आमा यज्ञो विशतु वीर्यवान् । आमो दिवे यज्ञिया मा विशन्तु सहस्रस्य मा भूमा प्रहासीत् ।

 

सुग्रीवाय २९–२ ब्रह्म जज्ञानं० पुष्पदन्ताय २०–२ इमं मे वरुण० वरुणाय २१–२ अयं दंष्ट्रो अर्चिषा यातुधानानुपस्पृशे जातवेदाः समिद्धः । आजिह्वया मूरदेवान्र- भस्व क्रव्यादो वृक्त्वऽपिदधत्स्वान् । असुराय २२–२ आयावो भूष शुचिपा तपनः सहस्रन्ते नियतो विश्ववारा । उपे ते अन्धो मध्यमयामियतो देव दधिषे पूर्वपे- यम् । शोषाय २३–२ ब्रह्मणाग्निः संविदानो रक्षोहा बाधितामितः । अमीवायुस्ते गर्भं दुर्नामा योनिमाशये । रोगाय २४ इत्यष्टौ पश्चिमे ॥ वायवायाहि० वायवे २५ नमो अस्तु सर्पेभ्यो० वासुकये २६ वषट्ते विष्ण० । मुख्याय ३७–२ प्रतद्विष्णु० बलाटाय २८–२ आप्यायस्व० सोमाय २९–२ येषु वा यातुधाना० सूर्याय ३०–२ अदि- तिर्द्यौ० अदितये ३१२– वसोः पवित्र० दितये ३२ इत्यष्टावुत्तरे ॥ अर्यमायातु वृ० अर्यम्णे ३३ । त्रिपदं । सविता पश्चात्तात्सविता पुरस्तात्सवितोत्तरातात्सविताधरा- त्तात् । सविता नः सुवत सर्वतातिं सविता नो रासतां दीर्घमायुः । सवित्र्यै ३४ । देवस्य त्वा० सावित्राय ३५ मा नो हेति विवस्वत इन्द्रः कोशमधुद्यवीम्, खेदय त्रिवृता दिवः । विवस्वते ३६ । ३ इन्द्र श्रेष्ठानि द्रविणानि देहि चित्तदक्षस्य

सुभगत्वमस्से । पोषां रयीणामरिष्टन्तनूनां स्वात्मानं वाचः सुदिनत्वमह्नात् । विबुधाधिपतये ३७ जीमूतस्येव भवति प्रतीकं यदीर्मे याति समिधामुपस्थे । अनाविद्धया तन्वा जया त्वं सत्त्ववर्मणो महिमा पिपर्तु । जयाय ३८ प्रसमित्र मर्त्तो अस्तु प्रयस्वन्यस्त आदित्य शिक्षितव्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो दूरात् । मित्राय ३९ । ३ रुद्राखुं ते पशुं० रुद्राय ४० मुञ्चामि त्वा० राजयक्ष्मणे ४१ इहैवैधिमाप० पृथ्वीधराय ४२ । ३ आपो अस्मान्मातरः० आपाय ४३ आपः पृणीत भे० आपवत्साय ४४ ब्रह्मा देवानां०ब्रह्मणे४५॥मध्यपदेषु नवसु ९। एकवारं पाठः । ततश्चरक्याद्यष्टक्षेत्रेशानाम् । आदावीशानतः कोणेषु । अयं पन्था अनुवित्तः पुराणो यतो देवा उत जायन्त विश्वे । अतश्चिदा जनुश्रेष्ठप्रवृद्धो ममातरमुपयः पातुवेकः चरक्यै १ अयं पन्था० विदार्यै २ अयं पन्था० पूतनायै ३ अयं पन्था० पापराक्षस्यै ४ । पूर्वतो दिक्षु । वोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः, अच्छान हूतउत्तरम् । स्कन्धाय ५ यते अर्यमन्वहतो० अर्यम्णे ६ शन्नो भवन्तु वाजिनो० जम्भकाय ७ रक्षा णे अग्ने तव रक्षणोभिरारक्षाणः सोमखग्रीणानः ।

प्रतिस्फुर वीरुज वीढुंजहि रक्षोमहिचिद्धा विधानम् । पिलिपिञ्छाय ॥ ८ ॥ यौते श्वानौ यमरक्षतारौ० सर्वराक्षसादिभ्यः । तत ईशानतश्शरेषु । काण्डात्काण्डा० दुर्मदाय १ काण्डा० द्रुपदाय २ काण्डा० दुर्दशाय ३ काण्डा० द्रुमनाय ४ पञ्चरङ्ग-देवताभ्यः । तत ईशानतः कलशेषु । अग्निमीळे १ इषेत्वा २ अग्नआ याहि ३ शन्नो० ॥ ४ ॥ इन्द्रः पर्वता० ॥ यजमानमानीय । यत्रास्ति माता० । महागणपतये । ब्रह्मणे, कू० । ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै । गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै देवसेनायै सुधायै स्वाहायै मातृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै पुष्ट्यै आत्मदेवतायै । ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगाह्यै भगाक्ष्यै । अनुमत्यै राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वेश्वर्यै अन्नेश्वर्यै । एकान्तवासिन्यै दुर्गाक्षेत्रगणेश्वरदेवताभ्यः मातृमण्डलया-गदेवताभ्यः । विष्णुपञ्चाय० । ईशानाय, पर्जन्याय, जयन्ताय, इन्द्राय, सूर्याय, सत्याय, भृशाय, आकाशाय, अग्नये, पूष्णे, वितथाय, गृहक्षताय, यमाय, गन्धर्वाय, भृङ्गिराजाय, मृगाय, पितृगणाय, दौवारिकाय, सुग्रीवाय, पुष्पदन्ताय,

वरुणाय, असुराय, शोषाय, रोगाय, वायवे, वासुकये, मुख्याय, बलाटाय, सोमाय, सूर्यायये, अदित, दितये, अर्यम्णे, सवित्रे, सावित्राय, विवस्वते, इन्द्राय, जयाय, मित्राय, रुद्राय, राजयक्ष्मणे, पृथ्वीधराय, आपाय, आपवत्साय, ब्रह्मणे। चरक्यै, विदार्यै, पूतनायै, पापराक्षस्यै, स्कन्दाय, अर्यम्णे, जम्बकाय पिलिपिच्छाय, सर्वराक्षसादिभ्यः। दुर्मदाय, द्रुपदाय, दुर्दशाय, द्रुमनाय, पञ्चरङ्गदेवताभ्यः। इन्द्राय वज्र० पूर्वे हेरुकाय० वेश्मप्रतिष्ठानि० दीपधूपः ॥ गायत्र्यै नमः ३ वास्तुपुरुषाय विद्महे। वास्तुराजाय धीमहि। तन्नो वास्तुः प्रचोदयात् ३ अद्यतावत् महागणपतेः० वास्तुप्रतिष्ठानिमित्तमावाहयिष्यामि ॥ कलशावाहन ( पृ० ७–३ ) मनु। वास्तोरावाहनम् । एह्येहि नारायण विश्वरूप सर्वामरैरर्चितपादपीठ। चराचराणां जगतामधीश लक्ष्मीयुतो मेऽपचितिं गृहाण १ नमः कौस्तुभनाथाय हिरण्यकवचाय च। क्षीरोदार्णवसुप्ताय जगद्धात्रे नमो नमः २ नमो हिरण्यगर्भाय विश्वरूपाय विराजे। भूलोकप्रमुखा लोकास्तव देहे व्यवस्थिताः। ३ नन्दन्ति यावत्कल्पान्तं तथास्मिन्भुवने गृहे। त्वत्प्रसादेन देवेश पुत्रपौत्रयुतो

द्विजः ४ पञ्चयज्ञक्रियायुक्तो वसेदाचन्द्रतारकम् । श्वेताम्बरः० भगवन्पु० । दक्षिणान्तं । ये के च ज्मेति वास्तोः पुष्पं । चर्वणापूपैर्नैवेद्यं ग्रहाणां । ओं नमो आदित्यायेत्यादि मन्त्रैः । पृ० ११८–१२ ततोऽग्निकर्म । अन्नहोमं विधाय । मातृकापूजनं । पशूपहारः पृ० १२५।१३ ऋतुतिथिः । नैवेद्यं तावत् ॥ ततो लग्नवेलां परीक्ष्य । बृहद्द्वारसमीपे सर्वसंभारं संस्थाप्य पूर्णपात्रं पूर्णकुम्भं खड्गं गां दम्पती वेदवन्तं ब्राह्मणं दीप्तां चुल्लीं खण्डिनीं पेषणीं क्रौञ्चीं तीक्ष्णां काञ्चिकं मार्जनीं च संगृह्य यत्र २ प्रवेशः स्यात्तत्र २ तैः सह ॥ आदौ पूर्वतोरणपूजा । दारुनिर्मिततोरणचतुष्टयं चतुर्दिक्षु पूजयेत् । पूर्वमेव प्रतितोरणं शाखयोरधः कुम्भौ ( सनिवारि ) सजलौ भूमौ निक्षिप्य, तदुपरि कुश्रावकौ ( पर्व ) सशालियवाजाफलौ, तन्निकटे सजलाक्षतौ दीपौ क्षेत्रेशार्थं च संस्थाप्य ॥ पूर्वतोरणे त्रिपताकं, अन्येषु द्विपताकं सर्वं द्विमालायुतं च कृत्वा ॥ अथ सर्वतोरणेषुसामान्यपूजा । शुक्लाम्बरधरं० । महागणपतये प्रशान्ताय शिशिरघटाय शान्तितोरणदेवताभ्यः दीपधूपः । तोरणपृष्ठे । मृद्भस्मगोमयैः स्नाप्य कषायफलवारिभिः । आक्रम्य० । प्रसद्य भ० । इह गावः० ॥ याः फलिनी० उदुत्तमं० ।

ततः शंकुस्नानं २१ । अम्बुना । प्रथमं स्नानं गायत्र्या चाभिमंत्रितम् । गायत्र्यैनमः १ भस्मना । निर्दग्धंरक्षोः० २ । मृदद्भिः । उदुत्तमं ३ गोमयेन । इह गावः ४ सर्षपेण । रक्षोहणं ५ त्रेताग्निभस्म । बृहत्साम क्षत्रभृद्बृद्धवृष्ण्यं त्रिष्टुभौजः शुभितमुग्रवीरः । इन्द्रस्तोमेन पञ्चदशेनौज इदं वातेन सगरेण रक्ष ६ वृषशृङ्गेण । चत्वारि श्रृङ्गास्त्रयो अस्य पादाद्वे शीर्षे सप्तहस्तासो अस्ति । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश ७ क्षीरोदकं । मनसा काममाकूतिं० ८ हिरण्यतोयैः । हिरण्यवर्णां हरिणीं० ९ दर्भपिञ्जलैः । तरत्समन्धि धावति धारासुतोस्यान्धसः, तरत्समन्धी धावति १० तीर्थतोयैः । इमं मे वरुण० ११ नद्युदकं । इतो न्विन्द्रं स्तवामहेऽहं शुद्धः शुद्धेन साम्ना । शुद्धैरुक्तैर्वावृद्धांसं शुद्ध आशीर्वान्ममत्तु १२ पर्वताद्ध्रदमध्याद्वा । इन्द्रः पर्वता० १३ शङ्खतोयैः । वात आवातु भेशजं शम्भुमयो भुवि हृदि, प्राण आयूंषि तारिषत् १४ क्षेत्रमृत् । अश्वक्रान्ते० १५ वाल्मीकमृत् । अग्निर्ऋषिः प १६ रत्नवारि । ऋतं च सत्यं १७ माक्षिकोदकं । मधुवाता ऋ० १८ दधि । दधि क्राव्णो १९ सर्वोषधी । या ओषधयः २० पञ्चगव्यं । समुद्रादूर्मिर्म २१

देवर्षितर्पणं । **संव्रः सृजाभि** । अद्यतावत् **महागणपतेः० । प्रशान्तस्य शिशिरघटस्य शान्तितोरणदेवतानां वेश्मप्र० शान्तितोरणपूजनमर्चामहं करिष्ये** । आसनादि । **पुष्प** पूजा । **तोरणो**र्ध्वमध्ये । **महागणपतये** । तद्वामदक्षिणयोः । **श्रियै, सरस्वत्यै** । पुनः । **धात्र्यै, पर्जन्याय** । मध्ये । **वरुणाय** । मध्यपताकायां । **श्वेताय** । वामे । **वज्राय** । दक्षिणे । **शक्त्यै** । पुनः । **अग्निमीळे** । **ऋग्वेदाय** । **कृतयुगाय** । मालयोः । **शच्यै** । **लक्ष्म्यै** । स्तम्भयोः । **इन्द्राय** । **अग्नये** । शाखयोः । **आदित्याय** । **भौमाय** । कुम्भयोः । **गङ्गायै** । **यमुनायै** । कलशयोः । **प्रशान्ताय** । **शिशिर-घटाय** । क्षेत्रेशयोः । **हेरुकाय** । **त्रिपुरान्तकाय** । **शान्तितोरणदेवताभ्यः नैवेद्यान्तं** । पुरोळाशयोः **योस्मिन्निति क्षेत्रेशबलिः** पृच्छां **विसर्जयेत्** । एवं सर्वेषु । **विशेषो** यथा । **अथ दक्षिणतोरणपूजा** ॥ **पर्जन्याय, अशोकाय, भूतितोरणदेव-ताभ्यः दीपधूपः** ॥ **पुष्पपूजा तोरणो**परि । **महागण० श्रियै, सर०,** पुनः । **इन्द्राय, भर्गाय** । मध्ये । **अंशुपतये** । पताकयोः । **चण्डायै** । **सीतायै** । पुनः । **इषेत्वो** । **यजुर्वे-दाय** । **त्रेता०** । मालयोः । **धूम्रायै** । **मायायै** । स्तम्भयोः । **यमाय** । **नैर्ऋतये** । पुनः ।

शनैश्चराय । राहवे । शाखयोः । प्रत्यूषाय । प्रदोषाय । कुम्भयोः । भृङ्गिराजाय । विघ्नेशाय । कलशयोः । पर्जन्याय । अशोकाय । क्षेत्रेशयोः । वेतालाय । अग्निजिह्वाय । भूतितोरणदेवताभ्यः ॥ अथ पश्चिमे । सञ्जीवनाय, अमृताख्याय । बलाख्यतोरणदे० । पुष्पपूजा । तोरणोपरि । महाग० श्रियै, सरस्वत्यै । पुनः । विवस्वते अर्यम्णे । मध्ये । मित्राय । पता० । पाशाय । आपाय पुनः । अन्न आया० । सामवे । द्वापर्यु । मालयोः । गौर्यै, सरस्वत्यै । स्तम्भ । विष्णुचक्राय । हाटकेश्वराय । पुनः पाशाय । वायवे । शाखयोः । चंद्राय । शुक्राय पुनः आपाय । वरुणाय । पुनः वृषस्कन्दाय कुमाराय । कुम्भयोः । सिन्धवे । सरय्वै । कल० । सञ्जीवनाय । अमृताख्याय । क्षेत्रेशयोः । कालाक्षाय । करालाय । बलाख्यतोरणदे० ॥ अथोत्तरे । अर्थदाय । बुद्धिदाय । आरोग्यतोरणदेवताभ्यः । पुष्पपूजा । ऊर्ध्वे महाग० श्रि० सर० पुनः विष्णवे । पूष्णे । मध्ये । भगाय । पता० । गोदावर्यै । त्रिशूलाय पुनः । शन्नोदे । अथर्व, कलियु । मालयोः । बुद्ध्ये, भद्रकाल्यै । स्तम्भ । कुबेराय । ईशानाय, पुनः । बुधाय । बृहस्पतये । शा । सोमाय । ईश्वराय । पुनः । उमायै, चण्डायै । कुम्भ । कावेर्यै, सरस्वत्यै । कल । अर्थदाय, बुद्धिदाय । क्षेत्रेशयोः ।

एकपादाय । भीमेश्वराय । आरोग्यतोर० ॥ सर्वेषां तोरणानां प्रदक्षिणं कृत्वा पश्चिमतोरणेन प्रविश्य बृहद्द्वारोपरि गत्वा । तत्र पूजा । महाग० धर्माय, अधर्माय, देहल्यै, खिङ्खिन्यै मेरुप्राकारदेवताभ्यः वास्तुप्र० दीपधूपमनु क्षीराज्यमधुयवादिभिर्बृहद्द्वारोपरि देवर्षिपितृतर्पणम् । ॐभूस्तृप्यतां, ॐभुवः, ॐस्वः, ॐभूर्भुवः स्वः । ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिवः । पृथिवी, आपः, तेजः, वायुः, आकाशः, । वह्नितर्पयामि, सूर्यं, सोमं, वरुणं, वायुं, यमं, कुबेरं, इन्द्रं, पृथ्वीं, अपः, तेजांसि, अग्निं, आदित्यं, वरुणं, चन्द्रं, कुमारं, भौमं, विष्णुं, बुधं, इन्द्रं, बृहस्पतिं, सरस्वतीं, शुक्रं, प्रजापतिं, शनैश्चरं, गणपतिं, राहुं, रुद्रं, केतुं, ब्रह्माणं, ध्रुवं, अनन्तं, अगस्त्यं, कालं, विश्वकर्माणं, वसून् मरुद्गणान्, एकादशरुद्रान्, द्वादशादित्यान्, सिद्धान्, साध्यान्, विद्याधरान्, देवर्षीन्, नागर्षीन्, राजर्षीन्, श्रुतर्षीन्, तपर्षीन्, साध्यर्षीन्, ऋषीन्, परमर्षीन्, किन्नरान्, नागान्, गन्धर्वान्, वैनतेयान्, अप्सरसः, समुद्रान्, पर्वतान्, नक्षत्राणि, नक्षत्रदेवताः, देवमातॄः, देवपत्नीः, देवकन्याः, देवपुत्रान्, वेदान्, वेदाङ्गानि, यज्ञान्, धर्मं, अर्थं, कामं, मोक्षं, धर्मशास्त्राणि, [illegible] ऋतून्, [illegible]न्, दिशः, विदिशः, दिक्पतिं,

तीर्थानि, नदीः, सप्तलोकान्, सप्तपातालानि श्रियं सरस्वतीं दिवञ्चरान् नक्तञ्चरान् कण्ठोपवीती । सनकस्तृप्यतामित्यादि ॥ संव्वः सृजामि । आवाहयाम्यहं देवं गणेशं पृ० ७९–३ कुमारं २ । एवं ६ । अथपुष्पपूजा द्वारे । द्वारवासिन्यै वामान्यै द्वारलक्ष्म्यै विश्वकर्मणे खिङ्खिन्यै । द्वारमूले । गङ्गायै यमुनायै धर्माय अधर्माय वैश्रवणाय अस्त्राय नारदशस्त्राय धात्र्यै गौर्यै श्रियै लक्ष्म्यै शुष्कायै सिद्ध्यै जयायै विजयायै रक्तचामुण्डायै लम्बोष्ठ्यै वाराह्यै मङ्गलादेव्यै वास्तोष्पतये कीर्तये मायायै समृद्ध्यै वृद्ध्यै सिद्ध्यै विभूत्यै लावण्यै सुभगायै सुमनस्यै सौभाग्यै दूत्यै बहुरूपायै मनोहरायै सुभगायै कीर्तिन्यै जयन्त्यै विजयायै अपराजितायै प्रतापिन्यै भद्रङ्कर्यै महोत्सुकायै मोहिन्यै ध्वंसिन्यै लाञ्छिन्यै सिंहिन्यै मृत्युवर्धिन्यै लङ्गिन्यै कृपाकरिण्यै क्षयकारिण्यै मायादेव्यै मेषाय कूर्माय हृदाय त्रिभुवनेश्वराय नरसिंहायै गजासनाय दण्डहस्ताय मकराय कौवेर्यै नन्दिन्यादिभ्यः पूर्वादितः नन्दिन्यै सुभगायै सुमङ्गलायै भद्रङ्कर्यै अणिमायै लघिमायै महिमायै गरिमायै ईशितायै वशितायै प्राप्त्यै प्राकाम्यायै ईशिन्यै वशिन्यै सर्वसिद्ध्यै शेषभट्टारकाय अष्टाचत्वारिंशद्वास्तोष्पतिदे० ब्र० कू० ध्रु० अ० ह० ल० क० अर्घो नमः पुष्पं नमः

नैवेद्यान्तं । ततो लाजाक्षतौ विकीर्यन् । वामे भार्यां समाधाय श्रोत्रियं दक्षिणे द्विजम् । जलकुम्भं वामहस्ते खड्गं दक्षिणपाणिना १ पूर्वं धेनुं प्रविश्यादौ वाद्यैर्मङ्गलभूषितैः । वाद्यं नानाविधं चैवं पुष्पैर्द्वारं प्रपूजयेत् २ लक्ष्मीसूक्तं १ कनिक्रदुदिति पृ० ४–३ पठन् प्रविशेत् । पुनश्चेदं । धारानिपातात्सलिलप्रकम्पाद्दंष्ट्रानिपातात्पवनप्रकोपात् । वह्नेश्च दाहान्मुषिताच्च चौरै रक्षत्विदं सद्म शिवं च मेस्तु २ खड्गहस्तो महातेजा दुरिष्टानां निवारकः । निर्गच्छ निर्गच्छ वदेत्प्रविशामि शुभं गृहम् २ नन्दे नन्दय वासिष्टे वसुभिः प्रजया सह । जये जयावहे देवि प्रजानां जयमावह ३ पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् । भद्रे कश्यपदायादे कुरु भद्रां मतिं मम ४ सर्वबीजसमायुक्ते सर्वरत्नौषधावृते । रुचिरे नन्दिने नन्दे वासिष्टे रम्यतामिह ५ प्रजापतिसुते देवि चतुरश्रे महीयते । सुभगे सुव्रते भद्रे गृहं काश्यपि रम्यताम् ६ पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते । भवभूतिकरे देवि गृहे भार्गवि रम्यताम् ८ अव्यङ्गस्वाकृते पूर्णे मुनेरङ्गिरसः सुते । इष्टिके त्वं प्रयच्छेष्टं प्रतिष्टां कामयाम्यम् ८ देवस्वामिपुरस्वामिगृहस्वामिपरिग्रहे । मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव [illegible] वर्धस्व धनधान्येन मेदिनि ।

उत्तमं वीर्यमास्थाय नमस्तेस्तु शिवा भव १० इति पठन्द्वारकोणान्ददत्खङ्गं च कोष्ठकान् । हर्म्यपृष्टे तदारुह्य जालाक्षतकपर्दिकान् ११ विकिरन्नवरुह्यास्मान्द्विजान्पादाग्रतो व्रजेत् । अकवाटमविच्छिन्नमदत्तबलिभोजनम् । गृहं न प्रविशेद्धीमानापदामालयं गतः । आदौ घटिका ( उगमुर ) पूजनं । तत्रादौ कपोतमोक्षणं कृत्वा । तोरणपूजावत् विशेषो । यथा महा० ऊर्ध्वदेवताभ्यः वा घटिकायागदेवताभ्यः दीपधूपः ॥ तत्पुरुषा० महादेवा ३ वासुदेवाय विद्महे ३ महागणपतेः० पृथिव्याः आपां तेजसः वायोः आकाशस्य । मध्ये । ब्रह्मविष्णुमहेश्वरदेवतानां । ऊर्ध्वे शिवस्य ईशानस्य ईश्वरस्य एकादशरुद्राणां रुद्रस्य शङ्कारकस्य, सर्पस्य वरुणस्य सदसस्पतेः बुधस्य धूमकेतोः विख्यातस्य उग्रस्य अजस्य भुवनेश्वरस्य मृत्योः कापालिकस्य । द्वादशादित्यानां आदित्यस्य रवेः गभस्तेः भानोः सवितुः दिवाकरस्य धर्मस्य तपनस्य भास्करस्य सूर्यस्य त्वाष्टुः स्वर्पतेः शोषस्य अङ्गारकस्य सोमस्य वायोः वामदेवस्य शिवस्य शक्त्याः नन्दिन्याः दूरवासिन्याः चिच्छिन्याः यमघण्टायाः कालरात्र्याः मायसेन्याः दिव्याः अम्बिकायाः डाकिन्याः अटाट्टहासिन्याः धारिण्याः जयन्त्याः ऐरुण्ड्याः औधीच्याः क्रोधिन्याः अशन-

जिह्वायाः उल्कापातिन्याः गर्जिन्याः हारिण्याः धुर्यचन्द्रिकायाः नक्षत्र्याः ग्राह्याः बोडिन्याः भीषण्याः पर्जन्यायाः सिंहक्रान्तायाः अपराजितायाः वानर्याः मूषक्याः सौरन्याः सौकर्याः पौष्याः चमन्तर्याः रोहिन्याः हरिकेशिन्याः घोरायाः सर्व-मुख्यायाः भीमायाः भैरव्याः जर्झिन्याः धरायाः पिचवक्रायाः परायाः भद्र्याः भद्रकाल्याः हरिद्रायाः चोरिन्याः वाचिन्याः चक्र्याः वृषन्याः धूसराननायाः इन्द्रस्य वरुणस्य अग्नेः वायोः व्योम्नः नवग्रहाणां घटिकादेवतानां वास्तुप्रतिष्ठा-निमित्तं घटिकादेवपूजनमर्चा० । नैवेद्यान्तं क्षेत्रेशबलिः । ततः स्थूनसमीपं गच्छेत् ॥ आदौ भूतादिनिवारणार्थं रत्नवाटिकां स्तम्भमूले रक्षोहणमिति मन्त्रेण भूमौ क्षिपेत् ॥ स्थूनस्य पञ्चगव्यादिना संस्कृत्येशाने सन्निधानकरणमन्त्रः ॥ ध्रुवांस्य नोस्य मृतस्य पत्नीं क्षेमे तिष्ठ घृतमुक्षमाणान्त्वा । स्थूणे सर्ववीराः सुवीरा अरिष्टवीरा इह संविवेश १ इह वै स्थूणे अमृतेन रोहाऽश्वमती गोमवत्यमृतवती सूनृतावत्यू-र्जस्वती च । पयस्वत्यस्मान्स्थूणे पयसाभ्यववृत्सु २ आत्वा कुमारस्तरुण आवत्सो जगता सह आत्वा परिस्रुतः । कुम्भ आदधुः कलश ऐरयदिति प्राञ्चं वंशमा-रोपयति ३ ऋतेन स्थूनामधिरोह वंशोग्रे विराजन्नपसीद शत्रून्, अथा रयिं

सर्ववीरा वयन्ते ४ मृत्पुत्तलिकासमाधानं । यो रुद्रो इति । तानस्याधः क्षेत्रेशद्वयं ( सन्यवारि ) तयोः समाधानं ॥ यो विश्वचक्षु १ ये देवा दिव्येकादश २ ॥ पूजा तोरणवत् महाग० ब्र० कू० ध्रु० शिख्यादिभ्यः पञ्चचत्वारिंशद्देवताभ्यः वेश्मप्रतिष्ठा निमित्तं धूपदीपः । पुष्पपूजा । स्तम्भमूले वामतः कूर्माय शेषभट्टारकाय बलि· दानवाय वैश्रवणाय शेषाय कृतयुगाय त्रेता द्वापर कलि, ऋग्वे, यजुर्वे, साम, अथर्वे, ऊर्ध्वे ध्रुवाय हरये विष्णवे । तदूर्ध्वे ब्रह्मणे इन्द्राय नवग्रहदेवताभ्यः महावैष्णव्यै अनन्ताय मध्ये कुमाराय गणपतये वास्तोष्पतये द्विभुजाय गदाभृते ईशानाय तदधः बहुरूपाय कामाय पुनरूर्ध्वे मेरवे मन्दराय हिमाचलाय ब्रह्मे· शाय हेमकूटाय पृथ्वीधराय तदधः वाग्देव्यै अनन्ताय ब्राह्म्यै माहेश्वर्यै वाराह्यै नारसिंह्यै ऊर्ध्वे छत्रधारिणे केशवाय सुतलाय पूर्वादितः जयायै दण्डहस्ताय मकरासनाय कौवीर्यै वेश्मवासिन्यै सपरिवारायै ईशानतः नन्दिन्यै सुभगायै सुमङ्गलायै भद्रङ्कर्यै ऊर्ध्वे सुमङ्गल्यै अणिमायै लघिमायै महिमायै गरिमायै ईशितायै वशितायै प्राकाम्यायै प्राप्त्यै सर्वसिद्ध्यै शिख्यादिभ्यः पंचचत्वा० अर्घपुष्पौ । नैवेद्यान्तं स्थूने मालां बन्धयेत् ॥ अथ सिद्धस्थाने पुनर्नैवेद्यं पुरोळाशो

यथा ॥ गृहपीठयागदेवताभिर्बहिभिः **सहितायै** सिद्धस्थाने ( ठाकुरकुठ ) **वाराह्यै** १ श्रीस्थाने ( भानकुट ) **महालक्ष्म्यै** २ द्वारे **तेजोवत्यै** ३ स्थूने **वज्रवत्यै** ४ तमोहरे ( तार ) **नारसिंह्यै** ५ भक्तभाण्डे **सोमवत्यै** ६ घटे **जलोदर्यै** ७ पेषण्यां **चर्ममुण्डायै** ८ मार्जन्यां **कृशोदर्यै** ९ शूर्पे **विन्ध्यवासिन्यै** १० कुण्डे **दक्षकर्णाय** ११ प्रस्तार्यां ( भ्रान्दकन्य ) **त्वष्टुवक्त्रायै** १२ शकटे ( मञ्जुल ) **प्रेतवक्त्राय** १३ उपले ( काज्यवठ ) **गोमुख्यै** १४ उलूखले **वेध्रवत्यै** १५ दर्व्यां **पुत्रवत्यै** १६ काञ्जिके **चक्रेश्वर्यै** १७ उच्छि-ष्टवार्भाण्डे **वासिन्यै** १८ भारधान्यां ( गरवंज ) **विघ्नेश्यै** १९ गोस्थाने **मङ्गलायै** २० भाण्डमण्डले **चन्द्रिकायै** २१ इष्टौ ( अग्निमनन ) **ज्वालामुख्यै** २२ मुसुले **भद्रकर्ण्यै** २३ कुट्टिन्यां **लम्बोष्ठ्यै** २४ कर्तर्यां **कालरात्र्यै** २५ करयष्ट्यां ( गदा ) **महाकाल्यै** २६ चुल्ल्यां **अग्निवासिन्यै** २७ वेळवर्दे ( ठठज दग़ुन ) **महामायायै** २८ पात्रे ( कण्ड्यलिज ) **अश्वमुख्यै** २९ कळच्छे ( क्रच ) **छुन्दिन्यै** ३० चालन्यां **शंकुकर्ण्यै** ३१ दीपे **प्रभासिकायै** ३२ चरुके ( भतटठल ) **गजकर्ण्यै** भोजनपात्रे **अमृताक्ष्यै** ३४ देहल्यां ( भान्द अन्दरकुन ) **द्वारवासिन्यै** ३५ ऊर्ध्वद्वारे ( हङ्ग ) **खिङ्खिन्यै** ३६ मध्ये **शेषाय** ३७ ईशाने **वृषभनन्दिन्यै** ३८ नैर्ऋते **सूकराय**

३९ वायवे नागाय चत्वारिंशत्स्थानयोगिनीभ्यः गृहमध्ये सर्वयोगिनीसहिताय भैरवाय नैवेद्यं ॥ यागस्थाने नैवेद्यं ॥ इळामग्ने इत्यादि पर्वतंत्रं ॥ अग्निं पृच्छां च विसर्ज्य धनं गुणं देहि पुनीहि मह्यं लुनीहि पापेन्धनसञ्चयं च । अकारणाद्वैरपरान्ह्यनार्यान्छ-त्रून्सम स्ताञ्जहि जातवेदाः १ राज्ञां शिवं० २ कलशपृच्छां विसर्ज्य । आपन्नोस्मि । ईशानविष्णु । अथवास्तोः पुष्पाणि । श्वेताम्बरः । क्षमस्व देवदेवेश देवाधि-ष्ठितविग्रह । पुत्रपौत्रादिकं सौख्यं देहि मे वास्तुपूरुष १ राज्यं देहि धनं देहि लक्ष्मीं देहि च पुष्कलाम् । आयुरारोग्यमैश्वर्यं देहि० २ सर्वलक्षणसम्पूर्णः सर्व-देवनमस्कृतः । प्रसन्नो वरदो देव भवाद्य वा० ३ अस्मिञ्जन्मनि मे नाथ कृतं पापं यदेव वा । तन्मे नाशय देवेश शीघ्रं त्वं वास्तु० ४ सप्तजन्मकृतं पापं वाङ्मनःकायकर्मजम् । तत्सर्वं विलयं यातु प्रसादात्तव सर्वदा ५ कल्पकोटिसह-स्राणि महापद्मशतानि च । अयुतं नियुतं चैव देवलोके वसेत्सुखी ६ मानुष्यं पुनरावृत्य चक्रवर्ती भृतो भवेत् । शूरश्च बहुपुत्रश्च बहुसौख्यश्च जायते ७ धन-धान्यसमृद्धश्च नित्यतृप्तो भवेच्च सः । यथावल्लोकपालश्च खेचरैर्भूचरैः सह ८ बहु-वर्षशतायुश्च स्वर्गलोके महीयते । अप्सरोगणसङ्कीर्णे विमानेष्यवतिष्ठति ९ भूर्लो-

कप्रमुखा लोकास्तव देहे व्यवस्थिताः । नन्दन्ति यावत्कल्पान्तं तथास्मिन्भवने गृहे १० त्वत्प्रसादेन देवेश पुत्रपौत्रयुतो द्विजः । पञ्चयज्ञक्रियायुक्तो वसेदा-चन्द्रतारकम् ११ धारानिपातात्सलिलप्रकम्पाद्दंष्ट्रानिपातात्पवनप्रकोपात् । वह्नेश्च दाहान्मुषितांश्च चौरै रक्षत्विदं सद्म शिवस्त्वमेव १२ गणेशस्य सर्गारम्भे० विभ्र-द्दक्षि० शब्दब्रह्ममये० । देवि प्रपन्ना० । यन्मया क्रियते कर्म जागृत्स्वप्नसुषुप्तिषु । तत्सर्वं तावकी पूजा भूयाद्भूत्यै नमः शिवे १ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोयमिति मां मत्वा क्षमस्व परमेश्वरि २ जानताऽजानता वापि यन्मया क्रियते शिवे । मम कृत्यमिदं सर्वमितिमत्वा क्षमस्व मे ३ कर्मणा मनसा वाचा त्वया नान्या गतिर्मम । अनुचारेण भूतानां रक्ष त्वं परमेश्वरि ४ यदक्षरपदभ्रष्टं मात्राहीनं च यद्गतम् । क्षन्तुमर्हसि देवेशि कस्य न स्खलितं मनः ५ क्षमस्व देवदेवेशि त्रिपुरे परमेश्वरि । तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तु मे ६ ग्रहेषु । अहिंसकस्य० ( पृ० १२०–४ इति क्षमापुष्पाणि नमो ब्रह्मणे इति तर्पणम् ॥ इतिवेश्मप्रतिष्ठा ॥ अथ रत्नवाटिका । सुवर्णं रजतं ताम्रं कांस्यं लोहं त्रपु तथा । रीतिं भृङ्गारकं सीसं विद्रुमं स्फाटिकं तथा । सुन १ रूप २ त्राम ३ लुय

४ शस्तूर ५ सर्तेल ६ ज्यस्त ७ भाङ्गरे ८ कलाय ९ लदूर १० सुट्कफले ११ ॥ राजवर्तं च ( अल्मास ) गोमीदं ( जर्द ) १३ शङ्खं च १४ मणिमौक्तिकम् १५ गारुत्मतं ( याको ) १६ पद्मरागं ( जम्बोद ) १७ वज्रं ( यामुन ) १८ वैडूर्यकं मणिम् ॥ ३ ॥ रसं ( पारूद ) मनःशिला मुस्था वचः कुष्टं नखं तथा । मुरा ( छर ) शैलेय ( वटा फटो ) कर्पूरं मृगनाभी म कुङ्कुमम् ॥ चन्दनद्वयमारीचं पिप्पीली च शितावरी ( क्रूचू ) हरितालं मधुयष्टी ( मजेठ ) मुद्गपर्णी ( शङ्गूर ) कुमारिका ॥ पुनर्नवा विष्णुक्रान्ता शतपुष्पा ( सुयपुष ) सुवर्चला । ( सुचल ) सहदेवी च व्याघ्री च श्यामा ब्राह्मी महौषधिः ( शुण्ठ ) । हरिद्राद्वय दूर्वा च अश्वगन्धा कच्योरका ॥ च्येना च ( दालचीन ) भूतकेशी च ( भूतजटा ) तथा वीतसिपत्रकम् । अर्कपर्णी मपामार्गं यवा धान्यं सरोवरम् । त्रिफला चैव ( हलिल बलिल आमूल ) दैत्यैन्द्रं ( शुङ्गरफ ) पद्मचारि ( पम्भचालन ) लवङ्गकम् । जातिफलं च सूफारी पहाण्डिका च सर्षपम् ॥ इति ॥ अथ सामग्री ॥ अग्निहोत्रसमिधः घृतं श्रीफलं अक्षोट ११ वास्तोरर्थे । यवाक्षततिला लाजा बधिरः श्रावकानि ( टाकिह ) दीपानि २० चरक्याद्यर्थे ८ तोरणचतुष्टयार्थे ८ रत्नदीपार्थं ४ यागस्य चतुर्दिक्षु कुम्भार्थं शनिवारि-

दयतवारू १ । हर्म्यपृष्ठे मोक्षणार्थं कपोतं । हन्द वरि । गृहस्य चतुर्दिक्षु कोल मण्डनं कलशार्थं छिट सोल कान ४ शंशिर भरण्य (तोरण) ४ वास्तुपुरुष (तान)॥ मधु सर्षपा कर्पूरं पुष्पमाल तोरणार्थे ९ द्वारार्थे १ ताने १ बृहद्वारे ( उग ) १ । प्रवेशे कामधेनुः कञ्जपावो, दजवुन अकचोर, दांफुत जङ्गार्थं पञ्चरङ्गदेवता ( नारे-वन ) वास्तोःकोणेषु शरान्संकील्योपरि साल सहितात् पञ्चरङ्गेन बंधयेत् पताका तोरणेषु ५ बृहद्वारे २ हर्म्ये ( उग ) २ पशुः विप्रतत्रतारकयोः वस्त्रं । वनवोन । तुम्बकनारि वगैरे । पृथक्पाकेन पुरोळाशान् तोरणादि क्षेत्रेशार्थ २० पश्चात्सिद्ध-स्थाने । सिद्धस्थाने वाराह्यै इत्यादि नैवेद्यार्थं पुरोळाशं ॥ भक्तपाचनभाण्डे अक्षो-टसप्तकं क्षिपेत् । रत्नवाटिकार्थं वारू १ इति ॥

## ॥ अथ पञ्चगव्यविधिः ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् १ गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि २ तेजोसीति घृतं प्रोक्तं देवस्य त्वा कुशोदकम् । गोमूत्रं गोमये क्षेप्यं ते संक्षि[illegible] ३ तानि दध्नि प्रक्षिप्यानि तत्सर्वं

पयसोन्तरे । एकीकृत्य तु तत्सर्वं कुशोदकविमध्यगम् ४ आपो हिष्ठेति चालोड्य प्रणवेन तु तत्पिबेत् । औदुम्बरे पद्मपत्रे रौप्यपात्रे हिरण्मये ५ मंत्रपूतं पिबेत्तत्तु त्रीन्वारान्पञ्चगव्यकम् । शुद्धवतीति मंत्रेण प्रक्षिपेद्दिक्षु सर्वतः ६ पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते । घृतं च पलमात्रं स्याद्गोमूत्रं तोलकद्वयम् ७ दधि प्रसृतमात्रं स्यात्पञ्चगव्यं त्विदं स्मृतम् । अथवा पञ्चगव्यानां समानो भाग इष्यते ८ मूलमंत्रेण संमंत्र्य कुशाग्रेणैव शोधयेत् । तेन सर्वविशुद्धिः स्यात्सर्वपापनिकृन्तनम् ९ गोमूत्रं ताम्रवर्णायाः शुद्धवत्यास्तु गोमयम् । पयः काञ्चनवर्णाया नीलायाश्च तथा दधि १० घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा । गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश ११ पयसो द्वादश प्रोक्ता दध्नः पञ्चदश स्मृताः । घृतस्याष्टादश प्रोक्ताः प्रमाणं पञ्चगव्यके १२ एकोनविंशमाषास्तु कुशोदकस्य च स्मृताः । गोमूत्रमुत्तरे स्थाप्यं गोमयं वारुणे दधि १३ प्राच्यां याम्यां घृतं क्षीरं मध्ये चैश्यां कुशोदकम् । वरुणो देवता मूत्रे गोमये हव्यवाहनः १४ विष्णुः क्षीरे दध्नि सोमो घृतस्य पितृमांस्तथा । कुशोदके भवेद्ब्रह्मा पञ्चगव्यस्य देवताः १५ मातृघ्नं भ्रूणहन्तारं गुरुतल्पगमेव वा । पञ्चगव्यं सकृत्पीतं पापेभ्यो

विनिवर्तयेत् १६ इति ॥ अथदिक्क्षेपणमंत्राः ॥ एतोन्विन्द्रं स्तवामहेहं शुद्धः शुद्धेन साम्ना । शुक्तैरुक्तैर्वावृध्यासंशुद्धं आशीर्वान्मम १ तुतान्धुवाम यज्ञिर इन्द्रमुक्ता न वावृधः । पुरूण्यस्य पांस्यासिषासन्तो हवामहे २ इन्द्र शुद्धो हतो नहि शुद्धाशुद्धसिरूतिमिः । शुद्धो रयिं निधारय शुद्धः समद्धि सौम्यः ३ इन्द्रः शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुपे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजो सिषामहि ४ पञ्चव्युष्टीरनु पञ्चदुहागां० ५ इति पञ्चगव्यविधिः ॥

## ॥ अथ शंकुप्रतिष्ठा ॥

ये देवा दिव्येकादशस्थेत्यनेन वास्तोः पुष्पं क्षिपेत् । ततो रत्नमूलिकाद्रव्याणि ( पृ० १५५–७ ) घटिका ( वारि ) चतुर्पु संगृह्य । घटिकाश्चतुष्कोणेषु निक्षिप्य तदुपरि चतुरश्मानं संस्थाप्य तदुपरि अश्मचूर्णेन ईशाने गवः । आग्नेय्यां वाजिनः । नैरृते मनुष्यस्य । वायव्यां गजस्य । मध्ये सर्पस्य मूर्ति विधाय । ब्रह्मकलशे । प्रधानं अमीवहा० ४ ब्रह्मणे नम इत्यादि । क्षेत्रस्य पतिना० ॥ तीर्थे स्नेयं० । धूपदीपः ॥ गायत्र्यै नमः ३ अद्य तावत् महागणपतेः० ब्रह्मणः कूर्मस्य० शंकुप्रतिष्ठानिमित्तं कलशपूजनमर्चामहं करिष्ये ॐ कुरुष्व [illegible] ईशाने वृषभनन्दिन्याः पूजा ॥

तत्रादौ शंकुस्नानविधिः । लग्नसमये रत्नवाटिकायुतां समां भूमिं कृत्वा ध्रुवहरि-लक्ष्मीकूर्मानन्ताश्च देवताः पञ्च तोरणपूजावत् शंकुस्थाने पूज्याः । तथा हि धव-वृक्षस्य ( भून्यवृक्षस्य ) चतुर्विंशाङ्गुलं शंकुं भूमौ निक्षिप्य ॥ तीर्थे स्नेयं० शंकुप्रति-ष्ठानिमित्तं धूपदीपः ॥ ततो मृद्भस्मगोमयैः स्नानं । एकविंशतिस्नानं । देवर्षितर्पणं । जीवादानं च इत्यादि तोरणपूजावत् ( पृ० १४२–१० ) कृत्वा । गायत्र्यै नमः ३ अद्य-तावत् ध्रुवस्य हरेः लक्ष्म्याः कूर्मस्य अनन्तस्य ईशाने वृषभनन्दिन्याः आत्मनो० यथोक्तफलप्राप्त्यर्थं शंकुप्रतिष्ठानिमित्तं शिलाप्रतिष्ठानिमित्तं शंकुपूजनं शिलापूजन-मर्चामहं करिष्ये । यवान्विकीर्य । दक्षिणान्तं । अपूपाः नैवेद्यार्थं ध्रुवाय० ईशाने वृषभनन्दिन्यै नमो नैवेद्यं । पृच्छां विसर्ज्य २ एवं आग्नेय्यां । अश्वस्य (पृ० १४२–१०) सुभगायाः । नैवेद्यान्तं । पृच्छां विसर्ज्य २ । एवं ( पृ० १४२–१० ) नैरृत्ये । नरस्य सुमङ्गल्याः नैवेद्यान्तं पृच्छां विसर्ज्य ३ । एवं ( पृ० १४२–१० ) वायव्यां । नागस्य भद्रंकर्याः । नैवेद्यान्तं पृच्छां विसर्ज्य ४ । एवं ( पृ० १४२–१० ) मध्ये । शेषनागस्य ॥ ततो वैश्वदेवं । गोग्रासादि । क्षेत्रेशबलिः । कलशपृच्छां विसर्ज्य ॥ आह्वानंनैव० । नमो ब्रह्मणे० । उदकशेषं । इति शंकुप्रतिष्ठाविधानम् ॥

# आज्य भागः ३ ।



## अथ विष्णुपञ्चकम् ।

### पुरुषसूक्तम् १ ।

ॐनमो नारायणाय ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं, विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं, वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ २ ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता । विश्वात्मा

"पुरुषमेधः पुरुषस्य नारायणस्याऽऽर्षम्" ॥ पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ १ ॥
ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यऽतिष्ठद्दशा-ङ्गुलम् ॥ १ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उताऽमृतत्वस्येशानो यदऽन्ने-नाऽतिरोहति ॥२॥ एतावानऽस्य महिमाऽतोज्यायांश्च पुरुषः । पादोऽस्य विश्वा भू-तानि त्रिपादऽस्याऽमृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाऽभवत्पुनः । ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥ तस्माद्विराडऽजायत विराजो अधि पुरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमऽथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा यज्ञमऽतन्वत । वसन्तो अस्याऽसीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् । पशूंस्ताँश्चक्रे वायव्यानाऽऽरण्यान्ग्राम्याँश्च ये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजु-स्तस्मादजायत ॥ ९ ॥ तस्मादऽश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजाऽवयः ॥ १० ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं

किमऽस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसीदऽन्तरिक्षं शिर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँनऽकल्पयत् ॥ १४ ॥ सप्ताऽस्याऽसन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ "ते०" यज्ञेन यज्ञमऽयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

## अथ बृहत्पुरुषसूक्तम् २ ।

सहस्रशीर्षं दिव्यं तु विश्वाद्यं विश्वसम्भवम् । विश्वं नारायणं देवमऽक्षरं परमं पदम् ॥ १ ॥ "पुरुषमेधः पुरुषस्य नारायणस्य" ॐसहस्रशिर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतः स्पृत्वाऽत्यऽतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उताऽमृतत्वस्येशानो यदऽन्नेनाऽतिरोहति ॥ २ ॥ एतावानऽस्य

महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादऽस्याऽमृतं दिवि ॥३॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाऽभवत्पुनः । ततो भूमिं व्यक्रामत्साशनाऽनशने
अभि ॥४॥ ततो विराडऽजायत विराजो अधिपुरुषः । स जातो अतिरिच्यत पश्चाद्भूमि-
मऽथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्याऽसीदा-
ज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः । तेन
देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रिरे वायव्यानाऽऽरण्यान्ग्राम्याँश्च ये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सा-
मानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥ तस्मादश्वा अजा-
यन्त ये च के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥
यत्पुरुषं व्यदधुः कतिधैनमऽकल्पयत् । मुखं किमऽस्य कौ बाहू का ऊरू पादा
उच्येते ॥ ११ ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः । ऊरू तदऽस्य यद्वै-
श्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽधिसूर्यः ।
नसो वायुश्च प्राणश्च मुखादऽग्निरऽजायत ॥ १३ ॥ नाभ्या आसीदऽन्तरिक्षं शीर्ष्णो

द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १४ ॥ सप्ताऽस्या-ऽसन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥ वेदाऽहमेतं पुरुषं महान्तमाऽदित्यवर्णं तमसः परस्तात् । सर्वाणि रूपाणि विभज्य धीरो नामानि कृत्वाऽभिवदन्यदाऽऽस्ते ॥ १६ ॥ धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेव विदित्वाऽमृतत्वमेति नाऽन्यः पन्था अयनाय विद्यते ॥ १७ ॥ यज्ञेन यज्ञमऽयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १८ ॥ "ते०" अद्भ्यः सम्भृतः पृथिव्या रसाद्विश्वकर्मणः समवर्तताऽधि । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देव-माऽऽजानमऽग्रे ॥ १९ ॥ "इति पूर्वनारायणम् । अथोत्तरनारायणम्" ॐप्रजापति-श्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीरास्त-स्मिंस्तिष्ठन्ति भुवनानि विश्वाः ॥ १ ॥ वेदाऽहमेतं पुरुषं महान्तमाऽदित्यवर्णं तम-सस्तु पारे । तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ॥ २ ॥ यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय

ब्राह्मये ॥ ३ ॥ रुचं ब्राह्मयं जनयन्तो देवा अग्रे यदऽब्रवन् । यस्त्वेवं ब्राह्मणो विद्या-त्तस्य देवा आसन्वशे ॥ ४ ॥ श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमऽश्विनौ व्यात्तम् । इष्णन्निषाणाऽमुं म इषाण सर्वलोकं म इषाण ॥ ५ ॥ तदेवाऽग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥ ६ ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादऽधि । कलाः काष्ठा मुहूर्ताश्चाऽहोरा-त्राणि सर्वशः ॥७॥ अर्धमासा मासा ऋतवः परिवत्सराः । स आपः स दुघे उभे इमे अन्तरिक्षमऽथो स्वः ॥ ८ ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभ । न तस्येशे कश्चन यस्य नाम महद्यशः ॥ ९ ॥ न सन्दृशे तिष्ठति रूपमऽस्य, न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिगुप्तो य एतद्विदुरऽमृतास्ते भवन्ति ॥ १० ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरऽजायत ततः समुद्रो अर्णवः ॥ ११ ॥ समुद्रादऽर्णवादऽधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ १२ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमऽकल्पयत् । दिवं च पृथिवीं चाऽन्तरिक्षमऽथो स्वः ॥ १३ ॥ "ते०" अद्भ्यः सम्भृतः० ॥ १४ ॥ "सरिताङ्का-

इयपीनां सरितो यज्ञकीर्तिमिच्छमानानाम्" ॐहिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषितश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशेयो अस्य द्विपदश्चतुष्पदः कस्मै० ॥ २ ॥ य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य च्छायामृतं यस्य मृत्युः कस्मै० ॥ ३ ॥ येन द्यौरुग्रा पृथिवी दृढा येन सुस्तम्भितं येन नाकम् । यो अन्तरिक्षं विममे वरीयः कस्मै० ॥ ४ ॥ य इमे द्यावापृथिवी तस्तभाने आधारयद्रोधसी रेजमाने । यस्मिन्नधि विततः सूर एति कस्मै० ॥ ५ ॥ यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाऽहुः । दिशो यस्य प्रदिशः पञ्चदेवी कस्मै० ॥ ६ ॥ आपो ह यन्महतीर्विश्वमायुर्गर्भं दधाना जनयन्तीरऽग्निम् । ततो देवानां निरवर्तताऽसुरेकः कस्मै० ॥ ७ ॥ "ते०" आ नः प्रजाञ्जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ८ ॥ "आगस्त्यस्यत्र" वेनस्तत्पश्यद्भुवनस्य विद्वान्यत्र विश्वं भवत्येकनीडम् । यस्मिन्निदं सञ्च विचैति सर्वं स ओतःप्रोतश्च विभुः प्रजासु ॥ १ ॥

प्रतद्वोचेदऽमृतन्नु विद्वान्गन्धर्वो नाम निहितङ्गुहासत् । त्रीणि पदानि निहिता गुहासु यस्तानि वेद स पितुष्पिताऽसत् ॥२॥ सतो बन्धुर्जनिता संविधाता नामानि वेद भुवनानि विश्वा । यत्र देवा अमृतमाऽनशानास्तृतीये धामन्नऽभ्यैरयन्त ॥ ३ ॥ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वान्प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमुप संविवेश ॥ ४ ॥ परिद्यावापृथिवी विततं सद्य इत्वा परिलोकान्परिदिशः परिस्वः । ऋतस्य तन्तुं विततं विधृत्य तदपश्यत्तदभवत्तदासीत् ॥५॥ सदसस्पतिमऽद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिंमेधामयासिषम् ॥ ६ ॥ "ते०" यस्मादऽन्यो न परोऽस्ति जातो य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी ॥ ७ ॥

## अथ लक्ष्मीसूक्तम् २ ।

ॐपद्मद्वयवराभीष्टयुक्तपाणिचतुष्टयाम् । पद्मवर्णां भजे पद्मशायिनीं पद्मवासिनीम् ॥ १ ॥ पुस्तकाक्षाभयाढ्याढ्यां सितवर्णां त्रिलोचनाम् । महापद्मनिषण्णां तां लक्ष्मीं गजगतां नमः ॥ २ ॥ करयुगलगृहीतं पूर्णकुम्भं दधानां क्वचिदऽमलगजस्थां

शङ्खचक्राब्जपाणिम् । क्वचिदऽपि दयिताङ्के चामरव्यग्रहस्तां क्वचिदपि सृणिपाशौ विभ्रतीं नौमि लक्ष्मीम् ॥ १ ॥ "हिरण्यवर्णामेकोनाश्रीर्भार्गव्या श्रीरऽलक्ष्मीघ्नं श्रैव्यमानुष्टुभं वैशकर्यन्तं हि साम्नेयी चतुर्थी प्रस्तारपंक्तिस्त्रिष्टुभौ पञ्चदश्युपरिष्टाद्बृहती श्रीपुत्राः परिपट्" ॥ ॐहिरण्यवर्णां हरिणीं सुवर्णरजतस्रजम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽवह ॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामऽश्वं पुरुषानऽहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥ कांस्यस्मितां हिरण्यप्राकारामाऽर्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मनेमिं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मयऽन्तरायांश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिं वृद्धिं दधातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठाम-

ऽलक्ष्मीं नाशयाम्यऽहम् । अभूतिमऽसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्
॥ ९ ॥ मनसा काममाकूतिं वाचः सत्यमऽशीमहि । पशूनां रूपमन्नस्य मयि श्रीः
श्रयतां यशः ॥ १० ॥ कर्दमेन प्रजा भूत्वा मयि सम्भव कर्दम । श्रियं वासय मे
कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः स्रवन्तु स्निग्धानि चिक्लीत वस मे
गृहे । निच देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टां
पिङ्गलां पद्ममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽवह ॥ १३ ॥
आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो
ममावह ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमऽनपगामिनीम् । यस्यां हिरण्यं
प्रभूतं गावो दास्यो विन्देयं पुरुषानऽहम् ॥ १५ ॥ य आनन्दं समाविशदुपधाव-
न्विभावसुम् । श्रियः सर्वा उपासिष्व चिक्लीत वस मे गृहे ॥ १६ ॥ कर्दमेन
प्रजाः सृष्टा सम्भूतिङ्गमयामसि । [illegible]कामान्संसृज्महे ॥ १७ ॥ जात-
वेदः पुनीहि मां रायस्पोषञ्च धारय । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः

॥ १८ ॥ "ते०" अच्छान्नमित्रमहो देवो देवानग्ने वोचः सुमतिं रोदस्योः । वीहि स्वस्ति सुक्षितिं दिवो नृन्द्विषो अहांसि दुरिता तरेम तातरेम तवावसा तरेम ॥१९॥

## अथ आयुष्यसूक्तम् ४ ।

आयुष्यं दश दाक्षायणायैकर्चाः सनकः सनन्दनः सनातनः सहसंज्ञः समः सुश्रीः सुवाक्सर्वो हिरण्यात्मस्तुतिः पञ्चम्यष्टमी नवम्यस्त्रिष्टुभः सप्तमी शक्करी आद्या चतुर्थी च ॥ ॐ आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्व जैत्रायाविशतादिमाम् ॥ १ ॥ उच्चैर्वाजी पृतनाषाट् सभासाहं धनञ्जयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाहिताः ॥ २ ॥ शुन महां हिरण्यस्वपितुर्नामेव जग्रभ । तेनेमां सूर्यत्वचमऽकरं पुरुषप्रियम् ॥ ३ ॥ सम्राजञ्च विराजञ्चाभिष्टिर्या च मे ध्रुवा । लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र संसृज ॥ ४ ॥ अग्नेः प्रजातं परि यद्धिरण्यमऽमृतं जज्ञे अधि मर्त्येषु । य एनद्वेद स इदेन गर्हति जरा मृत्युर्भवति यो बिभर्ति ॥ ५ ॥ यद्वेद राजा वरुणो यद् देवी सरस्वती । इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस्व आयुषे ॥ ६ ॥ न तद्रक्षांसि न पिशाचाश्चरन्ति देवानामोजः प्रथमजं ह्येतत् । यो

बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घमायुः, स मानुष्येषु कृणुते दीर्घमायुः ॥ ७ ॥ यदाऽबध्नन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः । तन्म आबध्नामि शतशारदायाऽयुष्माञ्जरदष्टिर्यथा सत् ॥ ८ ॥ घृतादुल्लुप्तं मधुमत्सुपर्णं न्धनञ्जयन्धरणन्धारयिष्णु । मृणन्सपत्नानऽधरांश्च कृण्वदारोह मां महते सौभगाय ॥ ९ ॥ "ते०" प्रियं मां कुरु देवेषु प्रियं राजसु मां कुरु । प्रियं विश्वेषु गोप्त्रेषु मयि देहि रुचा रुचाम् ॥ १० ॥

## अथ महालक्ष्मीसूक्तम् ५ ।

पीयूषामृतकल्लोलसुधास्वादसुलोलपाम् । आनन्दवदनां देवीं सिद्धलक्ष्मीं नमाम्यहम् ॥ "अग्निवारुणीति वैकुण्ठस्य ब्रह्मणः । यजुः" ॐअग्निवारुणीमानुड्वाहीमालभेताऽनाज्ञात यक्ष्मो गृहीत नाज्ञात यक्ष्मो वा, एतां वित्तो या स्त्रीसत्यानड्वाही तस्मादेनामऽनज्ञात यक्ष्म गृहीत आलभेताग्निः सर्वा देवता यदेवास्य देवताभिर्निर्पितं, तदग्निना मुञ्चति यद्वारुणगृहीतं तद्वरुणेन यद्वहिनी तेनाग्नीयी यत्स्त्रीसती दान्ता, तेन वरुणी तस्मादऽग्निवारुणी भवति, त्वाष्टमांसे पदमालभेत पशु-

कामो मिथुनो वा एष योऽसेपात्वष्टा, मिथुनस्य प्रजनयिता तमेव भागधेयेनोपधावति, सोऽस्मा एतस्मान्मिथुनात्पशून्प्रजनयति, वरुणँ श्यामशितिकण्ठमालभेत, यं व्योमानं यक्ष्मो गृह्णीयाद्वारुणो वा एतं गृह्णाति, यं व्योमानं यक्ष्मो गृह्णाति, यद्वारुणो वरुणादेवैनं मुञ्चति, पाप्मनैष गृहीतो, य आमय्यावी श्याम इव पाप्मा यच्छ्याम पाप्मानमेवापहते । यच्छितिकण्ठो वरुणपाशमेव तेन प्रमुञ्चत, आश्विनं धूम्रललाममालभेत, यो दुर्ब्राह्मणं सोमं पिपाययिषेदऽश्विनौ वै देवानामऽसोमपा आस्तां तौ पश्चा सोमपीथं प्रामुतामऽश्विना एतस्य देवता, यः पश्चा सोमपस्ता एव भागधेयेनोपधावति, ता एनँ सोमपीथाय परिणयतः स्तायदिव यजेतस्तायदिव हि दुर्ब्राह्मणो ब्राह्मणो बभूषति धूम्र इव वा, एष यो दुर्ब्राह्मणो यद्धूम्रो धूम्रिमाणमेवापहते । यल्ललामो मुखत एव तेन तेजो धत्ते सारस्वतीन्धेनुष्टरीमाऽलभेत यं भ्रातृव्यानीव श्वासयेरन्वाचा वा एत एनं निःश्वासयन्ति वाक्सरस्वती यत्सरस्वती वाचैवैषां वाचं प्रतिश्रीणाति । धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषां स्तरीकरोति

सरस्वतीं धेनुष्टरीमालभेत यमऽजघ्निवांसमऽभिशंसेयुरऽशान्ता वा एतं वा गृच्छति, यमऽजघ्निवांसमऽभिशंसन्ति ग्रावसरस्वती यत्सरस्वती वाचैवैषांवाचं शमयति । ॐधेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषां स्तरीकरोति, सावित्रं पुनरुत्सिष्टमालभेत, यः पुरा पुण्यो भूत्वा पश्चा पापीयान्स्याद्यया वा एष देवतया पुरा पुण्यो भवति, साहि वा एतमऽनुसृजत्यऽथैष पापीयान्भवति सविता श्रियः प्रसविता तमेव भागधेयेनोपधावति स एनं पुनः श्रिये प्रसुवति, पापो वा एष पुरा भूत्वा पश्चाच्छ्रियमाप्नोति "ते०" योऽनुड्वान्भूत्वोक्षा भवति यथैव स श्रियं प्राप्नोत्येवमेवैनं श्रियं प्रापयति ॥ ॐमातर्नमामि कमले कमलायताक्षि ! श्रीविष्णुहृत्कमलावासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥ ॐरथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमऽगाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्विपिनि या हिरण्ये त्विषिरश्वेषु पुरुषेष्वन्तः । इन्द्रं० ॥२॥ सिंहे व्याघ्रे उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं० ॥ ३ ॥ "ते०" या राजन्ये

दुन्दुभावायताग्रामऽश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं० ॥ ४ ॥ मङ्गल्यमेतत्परमं पवित्रं संसारदुःखौघविनाशकारि । सुखप्रदं धर्मविदां नराणां मनोरथावाप्तिकरं प्रदिष्टम् ॥ भगवान् देवकीपुत्रः शङ्खचक्रगदाधरः । लक्ष्मीकान्तो महाबाहुः प्रीयतां केशवः सदा ॥ "अनेन मंत्रपाठेन आत्मनो० भगवान् वासुदेवः ॥ ८ ॥ सर्वपापहरः, सर्वसिद्धिदः परब्रह्मस्वरूपः, लक्ष्मीसहितो नारायणः प्रीयतां प्रीतोऽस्तु ॥"

इति विष्णुपञ्चकम् ॥

---

## अथ रुद्रपंचकम् ।

### रुद्रमन्त्रसूक्तम् १ ।

ॐ प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव । निवारय महामृत्युं मृत्युञ्जय नमोऽस्तुते । देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाभयदं सुशुभ्रम् । शङ्खाभयाऽब्जवरभूषितया च देव्या वामेङ्कितं शमनभङ्गहरं नमामि ॥ शुद्धस्फटि-

कसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ १ ॥ नील-
ग्रीवं शशांकाङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमऽभयप्रदम् ॥२॥
कमण्डल्वऽक्षसूत्राभ्यामऽन्वितं शूलपाणिकम् । ज्वलन्तं पिङ्गलजटाशिखमुद्योत-
कारिणम् ॥ ३ ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्य-
भोगसमन्वितम् ॥ ४ ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं
शुद्धं ध्रुवमऽक्ष मऽव्ययम् ॥ ५ ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं
ध्यात्वा द्विजः सम्यक्ततो यजनमाऽऽरभेत् ॥६॥ मृत्युञ्जय महादेव पाहि मां शर-
णागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनात् ॥ ७ ॥ आराधितो मनुष्यैस्त्वं
सिद्धैर्देवैर्महर्षिभिः । आवाहयामि भक्त्या त्वां गृहाणार्चां महेश्वर ॥८॥ हर शम्भो
महादेव विश्वेशाऽमरवल्लभ । शिव शंकर सर्वात्मन् नीलकण्ठ नमोऽस्तुते । इति
विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ ९ ॥

"ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृ-
तात् १०८" ॐआ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैरिह केतुमद्भिर्वाता

जवेन, बलमद्भिर्मनोजवा यातु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीणां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमाऽवाहयाम्यहम् ॥ ॐआवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमाऽरूढं नागाऽभरणभूषितम् ॥ प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव दीपोऽयं प्रतिगृह्यताम् ॥ "तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥" ॐशतरुद्रियं देवानां रुद्रशमनं भवाय शर्वायश्च प्रत्युत्क्रान्तानुवाकौ देवर्षी रुद्रदैवत्यस्त्रिष्टुप् छन्दः चयने विनियोगः, नमस्ते देवा रौद्रमानुष्टुभमाऽऽद्या गायत्री पंचमषष्ट्यौ, पाङ्क्थान्ता महापाङ्क्तिर्मा भैरेकपदा जगत्यनुष्टुप् त्रिष्टुप् महाबृहती यवमध्या रुद्रो देवता चरमेष्टिका, अस्य रुद्रस्य प्रश्नस्य अनुष्टुप् छन्दः अघोर ऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परः पुरुषः स एष देवता अग्निः ऋतुचरुमायाभिष्टिकायां शतरुद्रे विनियोगः, सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दः तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ परमेष्ठी ऋषिः समस्त-

पापक्षयार्थे पाठे विनियोगः ॥ "अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च । सर्वथा शर्व सर्वेभ्यो नमस्ते रुद्ररूपेभ्यः १०८" कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ ("चम" गात्रं भस्मसितं । "रुद्र") ॐनमः शिवाय वरदाय १०" ॐनमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः, उत त इषवे नमः । या ते रुद्र शिवा तनूरऽघोराऽपापकाशिनी तयानस्तन्वा शन्तमया गिरिशन्ताऽभिचाकशीहि । यामिषुङ्गिरिशन्त! हस्ते विभर्ष्यस्तवे, शिवां गिरित्र ताङ्कुरु माहिंसीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि, यथा नः सर्वमिज्जगदऽयक्ष्मं सुमना असत् । अध्यवोचदऽधिवक्ता प्रथमो दैव्योभिषक्, अहींश्च सर्वाञ्जम्भय सर्वांश्च यातुधान्योऽधराचीः परासुवः । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः, ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्राक्षो वैषां हेड ईमहे । असौ योऽवसर्पति नील-ग्रीवो विलोहितः, उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयति नः, नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो य अस्य सत्वानो

ऽहन्तेभ्योऽकरं नमः, प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परास्ता भगवो वप, विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत ॥१॥ अनेशन्नस्येषव आभूरस्य निषङ्गथिः, या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्व-मऽयक्ष्मेण परिभुज, परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधीहि तम्, नमांसि त आयुधायाऽनातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने, अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखं शिवो नः सुमना भव, या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो मृड जीवसे ॥ २ ॥ ("च०" वाजश्रमे "रु") ॐनमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमः शिष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो, नमो बभ्लुशाय व्याधिनेऽन्नानाम्पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतस्पतये नमो, नमो रुद्रायाऽततायिने क्षेत्राणाम्पतये नमो, नमः सूतायाहन्त्याय वनानां पतये नमो, नमो रोहिताय

स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिज्याय कक्ष्याणां पतये नमो, नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो ॥ नम आक्रन्दाय त उच्चैर्घोषाय सत्वानां पतये नमो, नमः कृत्स्नंवीताय धावते पत्तीनां पतये नमो, ॥ ३ ॥ ("च०" ज्यैष्ठ्यं च "रु") नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो, नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो, नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो, नमो निचराय परि-चरायाऽरण्यानां पतये नमो, नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो, नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो, नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो ॥ नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो, नम इषुमद्भ्यो धन्वायि-भ्यश्च वो नमो, नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो, नम आयच्छ-द्भ्योऽस्यद्भ्यश्च वो नमो, नमः विसृजद्भ्यो विध्यद्भ्यश्च वो नमो, नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो, नमः शयानेभ्य आसीनेभ्यश्च वो नमो, नमस्तिष्ठद्भ्यो

धावद्भ्यश्च वो नमो, नमः सभाभ्यः सभापतिभ्यश्च वो नमो, नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो, ("च०" शंचमे"रु") नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो, नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो, नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो, नमो गणेभ्यो गणपतिभ्यश्च वो नमो, नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो, नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो, नमः सेनाभ्यः सेनानीभ्यश्च वो नमो, नमो रथिभ्यो वरूथिभ्यश्च वो नमो, नमो महद्भ्योऽर्भकेभ्यश्च वो नमो, नमो युवभ्य आशिनेभ्यश्च वो नमो, नमः क्षुत्तृड्भ्यः संग्रहीतृभ्यश्च वो नमो, नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो, नमः कुलालिभ्यः कर्मारेभ्यश्च वो नमो, नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो, नमः श्वनिभ्यो मृगायुभ्यश्च वो नमो, नमः श्वभ्यः श्वपतिभ्यश्च वो नमो ॥ ("च०" ऊर्क्मे"रु") नमो भवाय च रुद्राय च, नमः शर्वाय च पशुपतये च, नमो नीलग्रीवाय च शितिकण्ठाय च, नमो व्युप्तकेशाय च कपर्दिने च, नमः सहस्राक्षाय च शतधन्वने च ॥ नमो गिरिशाय च शिपिविष्टाय च, नमो मीढुष्टमाय चेषुमते च, नमो ह्रस्वाय च वामनाय च, नमो बृहते

च वर्षीयसे च, नमो वृद्धाय च सवृद्धने च, नमोऽग्र्याय च प्रथमाय च, नम आशवे चाऽजिराय च, नमः शीभाय च शीघ्र्याय च, नम ऊर्म्याय चाऽवस्वन्याय च, नमो नाद्याय च द्वीप्याय च ("च०" अश्माचमे "रु") नमो ज्येष्ठाय च कनिष्ठाय च, नमः पूर्वजाय चाऽपरजाय च, नमो मध्यमाय चाऽप्रगल्भाय च, नमो बुध्न्याय च जघन्याय च, नमः सोभ्याय च प्रतिसर्याय च, नम आशुषेणाय चाऽशुरथाय च ॥ नमो बिल्मिने च कवचिने च, नमो वर्मिणे च वरूथिने च, नमः शूराय चावभेदिने च, नमः श्रुताय च श्रुतसेनाय च, नमो याम्याय च क्षेम्याय च, नम उर्वर्याय च खल्याय च, नमः श्लोक्याय चावसान्याय च, नमः श्रवाय च प्रतिश्रवाय च, नमो वन्याय च कक्ष्याय च, ("च०" अग्निश्चम "रु") नमो दुन्दुभ्याय चाहनन्याय च, नमो धृष्णवे च प्रमृशाय च, नमो निषङ्गिणे चेषुधिमते च, नमस्तीक्ष्णेषवे चायुधिने च, नमः स्वायुधाय च सुधन्वने च ॥ नमः सृत्याय च पथ्याय च, नमः काट्याय च नीप्याय च, नमो नाद्याय च वैशन्ताय च, नमः कुल्याय च सरस्याय च, नमः कूप्याय चावट्याय च, नमो वर्ष्याय चाऽवर्ष्याय च, नमो मेघ्याय च विद्युत्याय च,

नमो वीध्र्याय चातप्याय च, नमो वात्याय च रेष्म्याय च, नमो वास्तव्याय च वास्तुपाय च, ("च०" अंशुश्चमे "रु") नमः सोमाय च रुद्राय च, नमस्ताम्राय चारुणाय च, नमः शङ्गवे च पशुपतये च, नमः उग्राय च भीमाय च, नमो हन्त्रे च हनीयसे च, नमोऽग्रेवधाय च दूरे वधाय च, नमो वृक्षेभ्यो हरिकेशेभ्यो, नमस्ताराय, नमः शम्भवे च, मयोभवे च, नमः शङ्कराय च मयस्कराय च ॥ नमः शिवाय च शिवतराय च, नमः किंशल्याय च क्षयणाय च ("च०" इध्मा च मे "रु") नमः इरिण्याय च प्रपथ्याय च, नमः पुलस्तिने च कपर्दिने च, नमो गोष्ठ्याय च गृह्याय च, नमस्तल्प्याय च गेह्याय च, नमः पर्याय चावार्याय च, नमः प्रतरणाय चोत्तरणाय च, नमस्तीर्थ्याय च कुल्याय च, नमः फेन्याय च शिष्प्याय च, नमः सिकत्याय च प्रवाह्याय च, नमो ह्रदव्याय च निवेष्प्याय च, नमः काट्याय च गह्वरेष्ठ्याय च, नमः शुष्क्याय च हरित्याय च, नमो लोप्याय चोलप्याय च, नमः पांसव्याय च रजस्याय च, नमः सूर्म्याय चोर्म्याय च, नमः पर्ण्याय च पर्णशादाय च, नमः आखिदते च प्रखिदते च, नमोऽभिघ्नते चापगुरमाणाय च, नमः आखिदाय च विखि-

दाय च॥ नमो वः किरिकेभ्यो, देवानां हृदयेभ्यो, नमो विचिनुत्केभ्यो, नमो विक्षीणकेभ्यो, नम आनिर्हतेभ्यः॥ ("च०" अग्निश्च मे"रु") द्रापे अन्धसस्पते दरिद्रनीललोहित, आसां प्रजानामेषां पुरुषाणामेषां पशूनां माभेर्मा रुङ्मा नः किंचनाऽममत्। इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नःशमऽसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजीः, शिवा रुतस्य भेषजी तया नो मृड जीवसे । परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतेरघायोः, अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड । मीढुष्टम शिवतम शिवो नः सुमना भव, परमे वृक्ष आयुधन्निधाय कृत्तिं वसान उच्चर पिनाकम् । बिभ्रदुच्चर विकिरिड विलोहित नमस्ते अस्तु भगवः यास्ते सहस्रंहेतयोऽन्येऽस्मन्निव पन्तु ताः । ("च" गर्भा च मे"रु") सहस्रधा सहस्राणि हेतयस्तव बाह्वोः, तासामीशानो भगवः पराचीना मुखाकुरु ॥ ॐअसङ्ख्याता सहस्राणि ये रुद्रा अधि भूम्याम्, तेषां सहस्रयोजनेऽवधन्वानि तन्मसि॥ १ ॥ येऽस्मिन्महत्यऽर्णवेऽन्तरिक्षे भवा अधि,

तेषां० ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः, ते० ॥ ३ ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः, ते० ॥ ४ ॥ ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः, ते० ॥ ५ ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्, ते० ॥ ६ ॥ ये भूतानामऽधिपतयो विशिखासः कपर्दिनः, ते० ॥ ७ ॥ ये पथीनां पथि रक्षय ऐड मृडाय व्युधः, ॥ते०॥८॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः, ते० ॥९॥ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितष्ठिरे, ते०॥१०॥ ॐनमो अस्तु रुद्रेभ्यो, ये दिवि, येषां वर्षमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः, तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐनमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वातमिषवस्तेभ्यो० ॥ २ ॥ ॐ नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामऽन्नमिषवस्ते० ॥ ३ ॥ ( "च" एका च मे रुद्र० "ते०" ) यो रुद्रो० ॥ इति रुद्रमन्त्रसूक्तम् ॥१॥

## अथ चमानुवाकसूक्तम् २ ।

"रुद्र" प्रणतोस्मि महादेव० ॥ ... मात्रे ...सितं सितं च हसितं हस्ते

कपालं सितं, खट्वाङ्गं च सितं सितं च वृषभं कर्णे सिते कुण्डले । गङ्गाफेणसितो जटाजलसितश्चन्द्रः सितो मूर्धनि, सोऽयं सर्वसितो दधातु विभवं पापक्षयं शङ्करः ॥

"आशुः शिशान इति शुक्रज्योतिष्मानंऽशु प्रजननं सर्वाः प्रजाः कश्यपा इति कश्यपस्य वाजस्य प्रसवोऽग्नेः" ॐआशुःशिशानो वृषभो न युध्मो, घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः, शतँ सेना अजयत्साकमिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना, युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं, युधो नर इषुहस्तेन वृष्णा ॥ २ ॥ स इषुहस्तैः सनिषिङ्गिभिर्वशी सँसृष्टा सयुध इन्द्रो गणेन । सँसृष्टजित्सोमपा बाहू, शर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परिधीया रथेन रक्षोहा मित्राँ अपबाधमानः । प्रभञ्जन्सेनाः प्रमृणो युधाजयन्नऽस्माकमेध्यविता रथानाम् ॥ ४ ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजिज्जैत्रायनो रथमाऽतिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदं वज्रबाहुं जयन्तमऽज्मा प्रमृणन्तमोजसा । इमँ स जाता अनुवीरयध्वमिन्द्रसखायमऽनुसंव्ययध्वम् ॥६॥ अभिगोत्राणि सहसा गाह-

मानोऽदयोवीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडऽयुध्योऽस्माकं सेना अवन्तु प्रयत्सु ॥७॥ इन्द्र एषां नेता बृहस्पतिर्दक्षिणो यज्ञः पुर एतु सोमः । देवसेनानामऽभिभञ्जतीनां जयन्तीनां मारुतो यन्तु मध्ये ॥८॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनस्य वानां घोषो देवानां जयतामुदस्थात् ॥९॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वऽस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वऽस्मान्नु देवा अवता भरेष्वा ॥ १० ॥ शुक्रज्योतिश्च, चित्रज्योतिश्च, सत्यज्योतिश्च, ज्योतिष्मांश्च, सत्यश्चर्तपाश्चात्यँहा, ईदृङ्चान्यादृङ्च, सदृङ्च, प्रतिसदृङ्च, मितश्च, समितश्च, सभारा, ऋतश्च, सत्यश्च, ध्रुवश्च, धरुणश्च, धर्ताच, विधर्ताच, विधारय, ऋतजिच्च, सत्यजिच्च, सेनाजिच्च, सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गण ईदृक्षास एतादृक्षास, ऊपुणः सदृक्षास; प्रतिसदृक्षास एतान मितासश्च, संमितासो नोअद्य, सभारसो मरुतो यज्ञे, अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मानोभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ (... ... ... मन्यवे० ॥ "शता० क्षेपक"

मा नो महान्तं ॥ ७ ॥ मानोस्तोके तनये० ॥ ८ ॥ ॐनमस्ते अस्तु भगवः परमेश्वर, विश्वेश्वर, महादेव, शिव, सशिव, सदाशिव, त्रिकालकाल, कालाग्निरुद्र, नीलकण्ठ, अमृतेश्वर, बहुरूप, अघोर, तत्पुरुष, महामृत्युञ्जयभट्टारक, ते नमो नमः ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिराग्नतम् ॥ १ ॥ अनुवाक १ ॥ "च०") वाजश्च मे, प्रसवश्च मे, प्रयतिश्च मे, प्रसृतिश्च मे, धीतिश्च में, क्रतुश्च मे, स्वरश्च मे, श्लोकश्च मे, श्रावश्च मे, श्रुतिश्च मे, ज्योतिश्च मे, स्वश्च मे, प्राणश्च मे, व्यानश्च मे, अपानश्च मे, ऽसुश्चमे, चित्तं च मे, आधीतं च मे, वाक्च मे, मनश्च मे, चक्षुश्च मे, श्रोत्रं च मे, दक्षश्च मे, बलं च मे, ओजश्च मे, सहश्च मे, आत्मा च मे, तनूश्च मे, शर्म च मे, वर्म च मे, ऽङ्गानि च मे, ऽस्थीनि च मे, परूंषिच मे, शरीराणिच मे, आयुश्च मे, जरा च मे ॥ "क्षे०" यज्ञेन कल्पताम् । "रु०" ॐनमो हिरण्यबाहवे० ॥ "अग्नाविष्णू० । अनुवाकः ॥ २ ॥ "च०" ॐ ज्यैष्ठ्यं च मे, आधिपत्यं च मे, मन्युश्च मे, भामश्च मे, ऽमश्च मे, ऽम्भश्च मे, जेमा च मे, महिमा च मे, वरिमा च मे, प्रथिमाच मे, वर्ष्मा च मे, द्राघ्वाच मे,

वृद्धं च मे, वृद्धिश्च मे, सत्यं च मे, श्रद्धा च मे, जगच्च मे, धनं च मे, क्रीडा च मे, मोदश्च मे, वशश्च मे, त्विषिश्च मे सूक्तं च मे, सुकृतं च मे, जातं च मे, जनिष्यमाणं च मे, वित्तं च मे, वेद्यं च मे, भूतं च मे, भविष्यं च मे, सुगं च मे, सुपथं च मे, ऋद्धं च मे, ऋद्धिश्च मे, क्लृप्तं च मे, क्लृप्तिश्च मे, मतिश्च मे, सुमतिश्च मे ॥ ( 'यज्ञेन०' "रु०" नमः सहमानायनिव्याधिने० ॥ अग्नाविष्णू०' ॥ अनु० ॥ ३ ॥ "च०" ) ॐशंच मे, मयश्च मे, प्रियञ्च मे, ऽनुकामश्च मे, कामश्च मे, सौमनसश्च मे, भगश्च मे, द्रविणं च मे, भद्रं च मे, श्रेयश्च मे, वश्यश्च मे, यशश्च मे, यन्ता च मे, धर्ता च मे, क्षेमश्च मे, धृतिश्च मे, संविच्च मे, ज्ञातं च मे, विश्वं च मे, महश्च मे, सूश्च मे, प्रसूश्च मे, सीरं च मे, लायश्च मे, ऋतं च मेऽमृतं च मे, ऽयक्ष्मं च मे, ऽनामयं च मे, जीवातुश्च मे, दीर्घायुत्वं च मे, ऽनमित्रं च मे, ऽभयं च मे, सुगं च मे, शयनं च मे, सूषाश्च मे, सुदिनं च मे ॥ ( 'यज्ञेन०' "रु०" ॐनम आव्याधिनेभ्यो विविध्यन्त्यश्च वो नमो० ॥ 'अग्ना०' अनु० ॥ ४ ॥ "च०") ऊर्क्च मे, सूनृता च मे, पयश्च मे, रसश्च मे, घृतं च मे मधुश्च मे, सग्धिश्च

मे, सपीतिश्च मे, कृषिश्च मे, वृष्टिश्च मे, जैत्रं च मे, औद्भिदं च मे, रयिश्च मे, रायश्च मे, पुष्टं च मे, पुष्टिश्च मे, विभु च प्रभु च मे पूर्णं च मे, पूर्णतरं च मे, कुयवं च मे, क्षितिश्च मे, अन्नं च मे, इक्षुश्च मे, व्रीहयश्च मे, यवाश्च मे, माषाश्च मे, तिलाश्च मे, नीवाराश्च मे, श्यामकाश्च मे, ऽणवश्च मे, प्रियङ्गवश्च मे, गोधूमाश्च मे, मसूराश्च मे, मुद्गाश्च मे, खल्वाश्च मे। ('यज्ञे०' "रु०" ॐनमो भवाय च रुद्राय च०। 'अग्ना०'। अनु० ॥ ५॥ "च०") ॐअश्मा च मे, मृत्तिका च मे, गिरयश्च मे, पर्वताश्च मे, सिकताश्च मे, वनस्पतयश्च मे, हिरण्यं च मे, अयश्च मे, सीसं च मे, त्रपुश्च मे, श्यामं च मे, लोहितायसं च मे, अग्निश्च मे, आपश्च मे, वीरुधश्च मे, ओषधयश्च मे, कृष्टपच्यं च मे, ऽकृष्टपच्यं च मे, ग्राम्याश्च मे, पशव आरण्याश्च मे, वित्तं च मे, वित्तिश्च मे, भूतं च मे, भूतिश्च मे, वसु च मे, वसतिश्च मे, कर्म च मे, शक्तिश्च मे, ऽर्थश्च मे, एमश्च मे, इत्या च मे, गतिश्च मे। ('यज्ञेन०'। "रु०" ॥ नमो ज्येष्ठाय च०। 'अग्ना०'। अनु० ॥ ६ ॥ "च०") ॐअग्निश्च म, इन्द्रश्च मे, सोमश्च मे इन्द्रश्च म, सविता च म, इ०, सरस्वती च म, इ०, पूषा च म, इ०,

बृहस्पतिश्च म, इ०, मित्रश्च म, इ०, वरुणश्च म, इ०, धाता च म, इ०, त्वष्टा च म, इ०, मरुतश्च म, इ०, विश्वेदेवाश्च म, इ०, पृथिवी च म, इ०, अन्तरिक्षं च म, इ०, द्यौश्च म, इ०, समाश्च म, इ०, नक्षत्राणि च म, इ०, दिशश्च म, इन्द्रश्च मे। ('यज्ञेन०' "रु०" नमो दुन्दुभ्याय च०। 'अन्ना०' अनु० ॥७॥ "च०") ॐ अंशुश्च मे, रश्मिश्च मे, दाभ्यश्च मे, ऽधिपतिश्च मे, उपांशुश्च मे, ऽन्तर्यामश्च म, ऐन्द्रावायवश्च मे, मैत्रावरुणश्च मे, आश्विनश्च मे, प्रतिप्रस्थापनश्च मे, शुक्रश्च मे, मन्थी च मे, आग्रायणश्च मे, क्षुल्लकवैश्वदेवश्च मे, ध्रुवश्च मे, वैश्वानरश्च मे, ऐन्द्राग्नश्च मे, वैश्वदेवश्च मे, मरुत्वतीयश्च मे, महेन्द्रीयश्च मे, सावित्रश्च मे, सारस्वतश्च मे, पत्नीवतश्च मे, हारियोजनश्च मे। ('यज्ञेन०' "रु०" नमः सोमाय च०। 'अन्ना०' अनु० ॥ ८ ॥ "च०") ॐ इध्मा च मे, स्रुचश्च मे, चमसश्च मे, वायव्यानि च मे, द्रोणकलशश्च मे, पूतभृच्च मेऽपूतभृच्च मे, ग्रावाणश्च मे, ऽधिषवणश्च मे, ऽवभृथश्च मे, स्वगाकारश्च मे। ('यज्ञे०' "रु०" नम इरिण्याय च०। 'अन्ना०' अनु ॥९॥ "च०") अग्निश्च मे, घर्मश्च मे, ऽर्कश्च मे, सूर्यश्च मे, प्राणश्च मे, ऽश्वमेधश्च मे, पृथिवीच मे,

दितिश्चमेऽदितिश्च मे, द्यौश्च मे, शक्करीरङ्गुलयोदिशश्च मे, यज्ञेन कल्पतां, व्रतं चर्तुश्च, संवत्सरश्च, तपश्चाहोरात्रे, ऊर्वष्ठीवे बृहद्रथन्तरश्च मे। ('यज्ञे०'। "रु०" द्रापे अन्धसस्पते०। 'अन्ना'। अनु० ॥१०॥ "च०") ॐगर्भा च मे, वत्साच मे, त्र्यविश्चमे, त्र्यवी च मे, दित्यवाट् च मे, दित्यौही च मे, पञ्चाविश्च मे, पञ्चावी च मे; त्रिवत्साश्च मे, त्रिवत्सा च मे, तुर्यवाट् च मे, तुर्यौही च मे, पष्टवाट् च मे, पष्टौही च मे, उक्षा च मे, वशा च मे, ऽनुड्वाँश्च मे, धेनुश्च मे, ऋषभश्च मे, वेहश्च मे। ('यज्ञेन०' "रु०" सहस्रधा सहस्राणि०। "अन्नावि"। अ० ॥ ११ ॥ "च०") ॐ एका च मे, तिस्रश्च मे तिसृश्च मे, त्रयस्त्रिंशश्च मे, चतुस्रश्च मे, अष्टौ च मे, अष्ट च मे, ऽष्टाचत्वारिंशच्च मे, वाजश्च, प्रसवश्चाऽपिजश्च, क्रतुश्च, वाक्पतिश्च, वसुश्च, स्वमौर्धो मूर्धा वैयशनो, व्यश्वाँन आन्त्योऽन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि यमन ऊर्जे त्वा वृष्टयै त्वा प्रजानां त्वाऽधिपत्याय, आयुर्यज्ञेन कल्पतां मनो यज्ञे०, प्राणो य०, चक्षुर्य०, श्रोत्रं य०, वाग्य०, आत्मा य०, ब्रह्म य०, पृष्ठंय०, यज्ञो यज्ञेन कल्पताम्, ऋक्च, सामश्च स्तोमश्च यजुश्च बृहद्रथन्त-

रश्च, स्वर्देवा अगन्म, प्रजापतेः प्रजा अभूवन्नऽमृता अभूम वेट् स्वाहा । "वाजस्य नु प्रसवा इति षट्" ॐविश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वऽग्नयः समिद्धाः । विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् ॥ १ ॥ आ मा वाजस्य प्रसवो जगम्यादाऽमाद्यावापृथिवी विश्वरूपे । आमा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ २ ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥ ३ ॥ वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः । वाजो मा विश्वैर्देवैर्धनसाता इहावतु ॥ ४ ॥ वाजो मे अद्य प्रसुवातिदानं वाजो देवान्हविषा वर्धयाति । वाजस्य हि प्रसवेनान्नमेति विश्वा आशा वाजपतिर्जयेयम् ॥ ५ ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति । वाजस्य हि प्रसवेनान्नमिति सर्वा आशा वाजपतिर्भवेयम् ॥ ६ ॥ सँमा सृजामि पयसा पृथिव्याः, सँमा सृजाम्यद्भिरोषधीभिः, सोऽहं वाजस्य नौम्यग्नेः ॥ ७ ॥ "ते०" पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे । पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ८ ॥



इति चमानुवाकसूक्तम् २ ।

२ आज्य.

## अथ सौमारुद्रसूक्तं तृतीयम् ॥ ३ ॥

ॐवन्दे रुद्रमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे पन्नगभूषणं शशिधरं वन्दे पशूनां पतिम् । वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं वन्दे शैलसुतामनोहरतरं वन्दे शिवं शङ्करम् ॥ ॐ"सौमारुद्रमिति ईश्वरो भ्रातृव्यः, ब्राह्मणानि सुमन्तोः कश्यपस्य ब्रह्मणश्च" ॐसौमारुद्रं चरुं निर्वापयेच्छुक्लानां व्रीहीणां श्वेतायाः श्वेतवत्साया आज्यं मथितँ स्यात्तस्मिन्ब्रह्मवर्चसकामः, स्वर्भानुर्वा आसुरः, सूयन्तमसाऽविध्यत्स न व्यरोचत, तस्मै देवाः प्रायश्चित्तिमैच्छँ, स्तमेतयेष्ट्या याजयं, स्तयाऽस्मात्तमोपाघ्नँस्तमसैष प्रावृतो, योऽलं ब्रह्मवर्चसाय तत्र ब्रह्मवर्चस्वी भवति, तमएवास्मादऽपहन्ति, ब्रह्मवर्चसेनैनँ सँ सृजति, श्वेतायाः श्वेतवत्सायाः आज्यं भवति, शुक्ला व्रीहय एवमिव वै, ब्रह्मवर्चसं ब्रह्मवर्चसमेव सन्ददाति ॥ घृतेन प्रोक्षन्ति, घृतेन मार्जयन्ति शान्त्यै शान्तिर्ह्यापोऽप्यस्य ताँ रात्रीमाऽपो गृहान्नावहरेयुः परिश्रिते [illegible] परिगृहीत्यै, प्रादेशमात्रश्चरुरूर्ध्वो भवत्येवं तिर्यङ्क्तावान्वै पुरुषो यावदऽस्य प्राणाँ अभि, यावानेवास्यात्मा तस्मा-

त्तमोऽपहन्ति, साकं रश्मिभिः प्रचरन्त्यऽसा एवास्मादादित्य उद्यँस्तमोऽपहन्ति, तिष्या पौर्णमासे यजेत, तिष्यो वै रुद्रश्चन्द्रमाः सोमः सौमीरतः, प्राचीनमोषधयो रौद्रीः, प्रतीचीनमोषधयो रात्रीः प्रतीचीनं पुष्यन्ति, प्राचीनं शुष्यन्ति, प्रतीचीनं प्रत्यक्षमेवैना ऋध्नोतीश्वरो दुश्चर्मा भवितोर्यं एतया यजेते तीवस्त्वस्माद्ऽपहन्ति, मनोर्ऋचः सामिधीनीष्वऽप्यऽनुब्रूयान्मनुर्वा यत्किञ्चाऽवदत्तद्भेषजमाऽऽसीद्भेषजमेवास्मै करोत्यपक्षरन्ति सिन्धवो, मयोभुव इति, नराशंस्या परिददाति, शान्त्यै षट्पदा भवन्ति, षट्वा ऋतव ऋतुष्वेव परितिष्ठति ॥ ईश्वरस्तु तदऽति दुर्चर्मैव भवितोस्तेजाँसि ह्येष प्रत्यारोहन्निति, सौमापौष्णञ्चरुं पशुकामोऽनुनिर्वपेत्सोमो वै ब्राह्मणस्य, स्वा देवताः पशवः, पूषा स्वामेव देवतां, पशुभिर्बंहयते, त्वचमेव कुरुते, सौमारुद्रञ्चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्सोमो वा आसां प्रजानामऽधिपती, रुद्रोऽग्निरऽधिपतिर्वध्यस्य चाऽवध्यस्य चेशेऽधिपतिमेवैनं निर्याश्य, रुद्रायाऽपिदधाति, कृष्णानां व्रीहीणां भवति, कृष्णमिव वै तमस्तमो मृत्युर्मृत्युनैवैनं ग्राहयति, शरमयं बर्हिः शीर्न्यै वैभीतत्वा, इध्मो विभित्यै सौमारुद्रं चरुं निर्वपेत् ॥ भ्रातृ-

व्यतायैवाऽद्वितीयतायैवातस्यार्धमऽर्धं, सर्वं स्यादऽर्धं, शुक्लानां व्रीहीणाँ स्यादऽर्धं कृष्णानामऽर्धं, शरमयं बर्हिषोऽर्धं दर्भमयमऽर्धं वैभीतकमिध्मस्याऽर्धमऽन्यस्य वृक्षस्य सोमो वै ब्राह्मणस्य स्वा देवता स्वायामेवाऽस्मै देवतायां द्वितीयं जनयति, यदऽर्धमऽर्धं द्वितीयत्वायैव, तत्सौमारुद्रं चरुं निर्वपे,त्पयस्यामयाविनः सौम्यो वै जीवन्नाग्नेयः प्रमीतो नैव जीवो न मृतो य आमवायी, तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो वै पयः पयः पुरुषः, पय एतस्याऽमयति, यस्याऽमयति, पयसैवाऽस्य पयः स्पृणोति, ग्रसितं वा एष एतं सौमारुद्रयोर्निष्खिवदति, यो होता भवति, स ईश्वरः प्रमीतो अनड्वाहं तस्मै दद्यात्तं हन्यात्तस्याश्नीयात्सैव तत्र प्रायश्चित्तिः, सौमारुद्रश्चरुं निर्वपेत्, प्रजाकामो वा पशुकामो वा सोमो वै रेतोधा, रुद्रोऽग्निः स प्रजनयिता सोम एवास्मै रेतो दधात्यऽग्निः प्रजनयति, विन्दते प्रजां वा पशून्वा यतरस्मै कामाय निर्वपति ॥ "सौमारुद्रचतुष्कं भरद्वाजः सौमारुद्रः त्रिष्टुप्" ॐ सौमारुद्रा धारयेथामऽसुर्यं प्रवामिष्टयोऽरमश्नुवन्तु, दमे दमे सप्तरत्ना दधाना शं नो भूतं

चित्तिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः । केतोरग्निर्विज्ञातमग्निर्वाचस्पतिर्होता
मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ नमः ३ कया नश्चित्र० ४ अन्नात्प-
रि ५ ब्रह्मा देवानां० ६ पृथिवी शान्तिरन्तरिक्षं शान्तिः० ७ ॥ ततोऽग्निं पुष्पं दत्त्वा ।
सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः
॥१॥ यावद्धोमं तथाकर्म करिष्ये त्वदनुज्ञया । तावत्कालमिहातिष्ठ वह्ने विघ्नं नि-
वारय ॥ २ ॥ ततोऽग्निकोणे धमयेत् ॐ हुं हुतभुजे नमः ॥ अग्ने शकेति मन्त्रः । अथ
समित्पूजा । ॐ भूर्भुवः स्वः मन्त्रेण समिद्धमानयेद्बुधः । घृतवती पयः पृथिव्या इति
घृतदुग्धेन संस्पृशेत् ॥ दर्भकाण्डद्वयं प्रज्वाल्यावर्तनीयम् । येन देवा ज्योतिषोर्ध्वा उ-
दारय येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैत्वं यजमा-
नाय स्वस्ति इति ॥ ततो नमस्कारः । पृथिवी समित्तामग्निं समिन्धे तामहं समिन्धे
सा मा समिद्धा सुसमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् १ अ-
न्तरिक्षं समित्तां वायुं समिन्धे तामहं समिन्धे० २ द्यौः समित्तां सूर्यं समिन्धे

तामहं० ३ ओषधीनां पते ! सोम हव्यकव्येष्वऽयुक्तिताम् । यथा तथा गतां स-

स्यक् दूरीकुरु नमोऽस्तुते ॥ ततः पूजा । हव्यै कव्यै कुरुकुल्यायै सिन्धव्यै सिंह्यै अमृतवर्धन्यै अमृतरूपिण्यै पावकवर्धिन्यै वह्निप्रियायै नैवेद्यान्तमर्चयित्वा प्रणमेत् । हव्यं प्रणीहि हव्यं शृणीहिं हव्यं श्रपय हव्यं पाचय हव्यमसि हव्यत्वा हव्यं वहसि हव्यं सीद सुगमं प्रयासि ॥ ततः पुस्तकपूजा । सरस्वतीं देवयन्तो० । लक्ष्म्यै मेधायै धरायै धृत्यै तुष्ट्यै पुष्ट्यै वागीश्वर्यै वाग्देवतायै गायत्र्यै सावित्र्यै सरस्वत्यै अमृतेश्वर्यै । गन्धादि नैवेद्यान्तं कृत्वा ॥ अग्निभद्रं पठेत् । अग्नये समन०, वायवे०, सूर्याय०, वरुणाय०, साम्ने०, ब्रह्मणे०, राज्ञे० रथाय सम० ॥ उत्तरतः संस्तीर्येति आज्यभागान्तं हुत्वा ।

॥ इत्याज्याभागः ३ ॥

( यवतिलभागान्तरिदं )

## अथ प्रायश्चित्तस्थानकम् ।

यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ ध्यानं॥ श्रीनारायणसात्मरूपममलं ब्रह्मादिभिः संस्तुतं शङ्खचक्रगदाम्बुजानि दधतं दोर्भिश्चतुर्भिः सदा । लक्ष्म्या भूषितवामभागममलं पद्मे निषण्णं महापापानामभिसंहर-

न्तमनघं दोषापनुत्यै भजे ॥ भद्रं कर्णेभिरिति चतसृभिः स्योनोमइति छिद्रस्य ब्रवो मित्रावरुणयोरन्तेवासिनः पङ्क्तिरयातयानीन्द्रक्रतुमिति शक्तिर्वासिष्ठस्य प्रायश्चित्तानि सर्वान्तीयानि शिशुशैशवयोः प्रजापतिमनसीत्यादि मित्रो जनानित्यन्तं वैप्रुषासन्ततीनां वसिष्ठपुत्राणां स्वर्गतानां वाग्वै सरस्वती विंशानुवाकौ प्रायश्चित्तेति वैतानि हवींषि पापविमुञ्चनम् । यजुः ॐ भद्रं कर्णेभिः० १ स्वस्ति न इन्द्रो वृ० २ पृषदश्वा मरुतः० ३ शतमिन्नु शरदो० ४ ( ऋ० पृ० ) प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ, त्वांशश्वन्तमुपयन्ति वाजाः ५ श्रत्कर्णाय कवये वेद्याय वाचोभिर्नाकमुपयामि शंसन् । यतोभयमभयं तन्वो अस्त्वग्ने देवानामवहेड ईक्ष ॥ ६ ॥ अग्निर्वोदेवमग्निभिः सजोष यजिष्ठं दूतमध्वरे कृण्वध्वम् । यो मर्त्येषु निध्रुविनृतावातपूर्मूर्धा घृतन्नः पावकः ॥७॥ घृतप्रतीको घृतपृष्टो अग्ने घृताहवानो घृतमस्य धाम । घृतप्रुषो हरितस्त्वा वहन्तु घृतं पिबन्यजताद्देवदेवान् ॥८॥ ( अ० १ ) इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तु सप्त ते अग्ने त्रयस्त्रिंशत्, यन्मे मनसो विश्वकर्माग्निं शुभम्भाग्यानस्याग्निन्न ईळित ईळितव्यै, देवैः

पार्थिवैः पातु वायुर्न ईळित ईळितव्यै, र्दैवै रन्तरिक्षैः पातु सूर्यो न ईळित ईळितव्यै, र्दैवैर्दिव्यैः पातु विष्णुर्न ईळित ईळितव्यै, र्दैवैर्दिश्यैः पातु अग्निर्यजुर्भिः पूषा सुगाकारैस्त इमं यज्ञमवन्तु ते मामवन्त्वव आरभेनमारभध्वम् २ पृथिवी विभूवरि सिनीवाल्युबन्ध आचित्तिमनस्ते भुवि, विवस्ते य ऊर्मिर्हविष्य इन्द्रियावांस्तव ऋद्ध्या संसोमस्याज्यमसि,हविषो हविर्ज्योतिषो ज्योतिर्विश्वेषां देवानां भागधेयेस्थ देवबीतयेवो गृह्णामि, संव्वः सिचन्तु मरुतः संपूषा सन्धाता समिन्द्रः संबृहस्पतिः, संव्वोयमग्निः सिञ्चतु प्रजया च धनेन च आयुष्मन्तं कृणोतु माम्, मान्दावशः, आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः, तीव्रो रसो मधुपृचामरङ्गम आमा प्राणेन सह वर्चसागन्, आदित्पश्याम्युत वा शृणोम्यामा घोषो गच्छति वाङ्म आसम्, मेनेभेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः, समान्यायन्त्युपयन्त्यन्याः समानमूर्ध्व नद्यः पृणन्ति, तमूं शुचिं शुचयो दीदिवांसमपान्नपातं परितस्थुरापः, आपोहिष्ठामयोभुवस्तान ऊर्जे दधात न, महे रणाय चक्षसे, यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः, तस्मा अरङ्गमाम वो

यस्य क्षयाय जिन्वथ आपो जनयथा चनः, स ईं वृषा जनयंस्ता सु गर्भं स ईं शिशुर्धयति तं रिहन्ति, सो अपान्नपादूर्जयन्नप्स्वन्तर्वसु देयाय विदते विभाति, इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः, इह सहस्रदक्षिणो रायस्पोषः प्रजायतां, अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः सुपत्या सुवीराः, इदं बर्हिरतीबर्हिष्यन्येमं यज्ञं विश्वे अवन्तु देवाः, स्व आदमे सुदुघा यस्य धेनुः स्वधांपीपाय सुत्वन्नमत्ति, सो अपान्नपादन्नभिम्लातवर्णोन्यसीवेह तन्वा विवेश ३ स्कन्ना द्यौः स्कन्ना पृथिवी स्कन्नंविश्वमिदं हविः, स्कन्नादो विश्वा भूतानि प्रस्कन्नं जायतां हविः, इह गावोयं यज्ञः, पयस्वतीराप ओषधयः पयस्वान्मामकं वचः, अपां पयस्वद्यत्पयस्तेन नः सह वर्धतां, यदवाम्रक्षच्छकुनिर्मुखेन निर्ऋते तव, अग्निष्टत्सर्वं शुन्धतु हव्यवाड्वृतसूदनः, यदवाम्रक्षच्छुपान्मुखेन निर्ऋते तव, अग्निष्टत्सर्वं शुन्धतु हव्यवाड्घृतसूदनः, भूतिदन्ना घृतेन वर्धतां यज्ञं यज्ञाय मुञ्चतु स्वाहा, घृतेन वर्धतां भूतिर्मुञ्चेमं यज्ञं मुञ्च यज्ञपतिमंहसः स्वाहा, यास्ते अग्ने समिद्धो अप्स्वन्तर्वर्ष्मन्पृथिव्या उपसूर्ययाः, तास्ते गच्छन्त्वाहुतीर्घृतस्य देवान्ये

यजमानाय शर्म ४ यज्ञस्य हि स्थ ऋत्विजा इन्द्राग्नी कल्पना युवम्, हुताहुतस्य तृप्यतुसाहुतस्य हुतस्य च, हुतस्य चाहुतस्य चाहुतस्य च हुतस्य च, पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम्, सोमं यज्ञं तमो विद्न्मत्तिजोमो इमाः प्रजाः, मयाः सोमं पिवादिमं संसृष्टमुभयङ्कृतम्, मा नो ध्वरिषुः पितरो मोत देवा मा नः सबन्धुरुत वान्यबन्धुः, मा नो दुःशंस्यो अघशंस ईशताहुतोयं यज्ञो अप्येतु देवान्, सप्तर्त्विजः सप्तसदांस्येषान्दशक्षिपो अश्विन पञ्चवाजः, प्राणोव्यानोपानोमान आकृतिमग्निः स्वाहा, देवा हविरिदं जुषन्ताम् ५ आत्मा यज्ञस्य रंह्याः सुषाणः पवते सुतः प्रत्नानि पाति काव्यः, घोषा इनो नृषा अस्य श्वसा वाजसा उत आत्मा यज्ञस्य पूर्व्यः, आत्मान्वन्नभो दुह्यते घृतम्पयो ऋतस्य योनिरमृतं विजायते, समीचानः सुदानवः प्रीणन्तितन्नुरोहितमेव मेहन्ति पेरवः, देवा देवेषु श्रयन्तां प्रथमा द्वितीयेषु श्रयन्तां, द्वितीया तृतीयेषु श्रयन्तां, येस्थ त्रय एकादश त्रयश्च त्रिंशच्च त्रयश्च त्रीश्च शतात्रयश्च त्रीश्च सहस्रात इमं यज्ञमवन्तु ते मामवन्तुमेव आरभेन मारभध्वम् ६ वसवस्त्वोदीरयन्तु

रुद्रास्त्वोदीर्पयन्त्वादित्यास्त्वोच्छ्रयन्तु विश्वे त्वा देवा दृंहन्तु, ध्रुवा द्यौ ध्रुंवा पृथिवी ध्रुवासः पर्वता इमे, ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि, देवा ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः, दिवि दिव्यां दृंहान्तरिक्षेन्तरिक्षं दृंह पृथिव्यां पार्थिवान् दृंह, आ त्वा हर्षमन्तरेभूर्ध्रुवस्तिष्ठ विचाचलत्, विशस्त्वा सर्वा वाञ्छन्तु मा त्वाद्यज्ञे अधिभ्रशत्, ध्रुवं ध्रुवेण हविषा हविरवसोमन्नयामसि, यथा न इन्द्रः केवली विशो बलिर्ह्रतस्करत्, स्वाहा दिव आप्यायस्व, स्वाहान्तरिक्षादाप्यायस्व, स्वाहा पृथिव्या आप्यायस्वायुर्धा असि, ध्रुवायुर्मेदेहि वयोधा असि ध्रुवं वयो मे देहि तनूपा असि, ध्रुवतन्वं मे पाहि, चक्षुष्पा असि ध्रुवचक्षुर्मे पाहि, वर्चोधा असि, ध्रुववर्चो मे पाहि, अध्वर्यो यं यज्ञो अस्तुदेवा ओषधीभ्यः पशुभ्यो मे धनाय, विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देवयज्ञा, इहैवैधिमा पच्योष्टा पर्वता इवाविचाचलत्, इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुधारय, इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा हविः, तस्मै सोमो अधिब्रुवत्तस्मा वो ब्रह्मणस्पतिः, ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे, ध्रुवं विश्वमिदं जगद्ध्रुवो राजा

विशामसि ७ असवे स्वाहा वसवे स्वाहा, वसुधेयायस्वाहा, भूपतयेस्वाहा भुवन-पतयेस्वाहा भूतानां पतयेस्वाहा, भूतायस्वाहा, द्रप्सश्च स्कन्दपृथिवीमनुद्यामिमं च योनिमनु यश्च पूर्वः, समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः, यस्ते द्रप्स स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थे, अध्वर्यो वा परिवायः पवित्रान्तर्तें जुहोमि मनसा वषट्कृतम्, यो द्रप्सो अंशुः पतितः पृथिव्यां परिवा-पात्पुरोळाशात्करम्भात्, धानासोमान्मन्थिन इन्द्रशुक्रात्स्वाहाकृतमिन्द्राय तं जु-होमि, यस्ते द्रप्सो मधुमां इन्द्रियावान्स्वाहाकृतः पुनरप्येति देवान्, अध्वर्यो वा परिवायः पवित्रान्तर्तें जुहोमि मनसा वषट्कृतम्, यस्ते द्रप्सः स्कन्दति यस्ते अंशुरवश्चयः पुरोदिवः, अयन्देवो बृहस्पतिः सन्तत्सिञ्चन्तु राधसा ८ विसृष्ट धेनाः सलिला घृतच्युतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः, शरद्धेमन्त ऋतवो म-योभुव उदप्रुतो नभसीसं वसन्ताम्, आनः प्रजा मा देवानान्स्वमग्ने व्रतपा असि, यद्वो वयं प्रमिनाम व्रतानि विद्वषां देवा आविदुष्टरासः, अग्निष्टद्विश्वमापृणाति वि-द्वान्येभिर्देवानृतुभिः कल्पयति मधुश्च माधवश्च वासन्तिका ऋतू, शुक्रश्च शुचिश्च

ग्रैष्मा ऋतू, नभश्च नभस्यश्च वार्षिका ऋतू, इषश्चोर्जश्च शारदा ऋतू, सहश्चसहस्यश्च हैमन्तिका ऋतू, तपश्च तपस्यश्च शैशरा ऋतू, त इमं यज्ञमवन्तु ते मामवन्त्वनुव आरभेनुमारभध्वम् ९ असवे स्वाहा वसवे स्वाहा विभवे स्वाहा विवस्वते स्वाहा, शूषाय स्वाहा संसर्पाय स्वाहा मलिम्लुचाय स्वाहा गणश्रिये स्वाहा, चन्द्राय स्वाहा, ज्योतिषे स्वाहाऽभिभवे स्वाहाऽधिपतये स्वाहा, दिवापतये स्वाहा, इन्द्रस्य गृहोसि गृहीतो गृह्यो देवानां पूरसि तान्त्वा प्रविशामि, तान्त्वाप्रपद्ये सह गृहैः सह प्रजया सह पशुभिः सहर्त्विग्भिः सह सदस्यैः सहसोम्यैः सहदक्षिणीयैः सह यज्ञेन सह यज्ञपतिना, इन्द्राग्नी परिधीममावातो देवपुराकृता, तन्त्वेन्द्रस्य ग्रहप्रपद्ये सगुः साश्वः सपुरुषः सह यन्मे स्थितेन, अरिष्टया अविथ्यै संवेशायोपवेशाय गायत्र्यै च्छन्दसेऽभिभुवे स्वाहाऽरिष्ट्या अविथ्यै संवीशायोपवीशाय त्रैष्टुभेन च्छन्दसा जगत्याऽनुष्टुभेन पांक्त्यै च्छन्दसेऽभिभुवे स्वाहा १० द्यौश्च त्वा पृथिवी च श्रीणीता, महश्च त्वा रात्री च श्रीणीतां, वाक्च त्वा मनश्च श्रीणीता, मापश्च त्वोषधयश्च श्रीणीता, मृक्च त्वा साम च श्रीणी[illegible] [illegible]श्च श्रीणीतां, बृहच्च त्वा रथन्तरं

च श्रीणीतां, यज्ञश्च त्वा दक्षिणा च श्रीणीतां, सूर्यश्च त्वा चन्द्रमाश्च श्रीणीतां, दर्शश्च त्वा पौर्णमासश्च श्रीणीतां, ब्रह्मच त्वा क्षत्रं च श्रीणीतां, अर्कश्च त्वाऽश्वमेधश्च श्रीणीतां, श्रीतस्त्वं श्रीतोहमिन्दुरिन्दुमवागंस्तस्य त इन्द्र इन्द्रियावत इन्द्रपीतस्य सर्वगणः सर्वगणस्योपहूत उपहूतस्य भक्षयामि ॥ ११ ॥ विश्वा अग्ने त्वया वयं धारा उदन्य इव अतिगाहे महिद्विषः, या दिव्याष्टकास्यपसामपस्तमास्वपा असि, तस्यैत एना हविषा विधेम त्वं यज्ञो वरुणस्या वया असि, श्रुतकर्णाय, अनुमतेन मन्यस्व न इदं यद्भेषजं कृण्वमहेतनूषु, यद्वा तोकेषु तनूषु प्रजासु यद्वोष्वोषधीष्वप्सु ॥१२॥ हिरण्यगर्भः०, तदित्पदन्नविचिकेत विद्वान्यन्मृतः पुनरप्येति देवान्, त्रिवृद्भुवनं यद्रथवृहज्जीवो गर्भो न मृतः स्वाहा,आप्यायस्व, सन्ते पयांसि, आप्यायस्व मदिन्तम सोमविश्वेभिरंशुभिर्भवानः, सुश्रवस्तमः सखावृधे १३ अप्स्वग्ने। तपोष्वग्ने अन्तरां अमित्रान्तपशंसमररुषः परस्य, तपो वसो चिकितानो अचित्वान्विते तिष्ठन्तामजरा अयासः, योनः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो अनुष्यात्, तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान्, सम्मा कृणोतु

केतुमानक्कं चिद्दूर आसते । पावको यद्वानस्पतीन्प्रास्मा मिनात्यजरः, न हितो अग्ने तन्वः कूरमाना शमन्तः कपिर्बिभस्तिते जनं स्वं जरायुर्गौरिव मेष इव यदुपच विचचर्वेति यदप्सरद्दनुपरस्य खादति, शीर्ष्णा शिरो वक्षसा वक्ष एजयन्चंशुंबभस्ति हरितेभिरासभिः, सुपर्णावाचमक्रतोपद्याव्या खरे कृष्णा ईषिरा अनर्तिपुः, न्यङ्गि-यन्त्युपरम्य निष्कृतं पुरूरेतोदधिरे सूर्यश्रितः १४ अग्निना तपोन्वाभवत्सूर्येन तेजो, वायुना प्राणा, इन्द्रेण देवा, यमेन पितरः, सरस्वत्या मनुष्याः, सप्तदशेन स्तोमा, वामदेव्येन सामानि, गायत्र्या. च्छन्दांसि, मण्या रूपाणि, हिरण्येन वचांसि ति-रश्चि, राजिना सर्पा, अजगरेणाऽप्सव्याः, श्येनेन पतत्रिणो, व्याघ्रेणारण्याः पशवः, सुपर्णेन वयांसि, अश्वत्थेन वनस्पतय, ओदनेनाऽन्नानि, यवेनौषधयोऽश्ववृषेनैक-शफाः पशवो, वृषभेन गावो, वृष्णिनाऽवयो, बस्तेनाजा, श्चन्द्रमसा नक्षत्राणि ब्राह्मणेन वाचो, वाचा देवताः, स्त्रिया विराङ्गाब्णा पर्वताः, समुद्रेणापोऽद्भिः सत्यं, सत्येनर्तं,मृतेन तप,स्तपसा परमेष्टी, परमेष्ठिना मृत्युर्मृत्युना प्रजाः, प्रजाभिः सगर,स्तनूभिः प्रजापतिस्तदेवरन्वाभूति,रन्वा च भूयांसं मतिं च भूयांसं

ब्राह्मणानां श्रेष्ठश्च भूयांसम् १५ । यस्य द्रोणकलश उपदस्यति, कलशमेव तस्योपवायन्तं प्राणोनूपवस्यति प्राणो हि सोमस्तदाहुः, पयोऽवनयेदित्यऽथो खल्वाहुरन्तर्हितमेव वा, एतद्यत्पयो हिरण्यमेवाऽपोऽभ्यवनये, द्धिरण्यमभ्युन्नयेदऽमृतं वा, आप आयुर्हिरण्यमसृतादेवाध्यायुरात्मन्धत्ते, चत्वारो वरा देया, ब्रह्मण उद्गात्रे होत्रेऽध्वर्यव, एते वै यज्ञस्येन्द्रा, स्तानेव प्रीणाति, सैव तत्र प्रायश्चित्तिर्यस्य चमस उपदस्यति, चमसमेव तस्योपवायन्तं प्राणोनूपदस्यति, प्राणो हि सोमोऽयमध्वर्युरन्तमं ग्रहं गृह्णीया, त्तस्य संपातमवनयेत्प्रायश्चित्त्यै वै सोमो गृह्यते प्रायश्चित्त्यैवास्मै प्रायश्चित्तिं करोति, सर्वमायुरेति, सैव० यस्य ग्रावापि शीर्यते पशुभिर्वृज्यते, पशवो हि ग्रावाणो द्युतानस्य मारुतस्य ब्रह्म सामेन स्तुवीरन्पशवो, वै द्युतानो मरुतः स्वेनैवैनं साम्ना सन्दधाति, पशुमान्भवति, सैव०, प्रजापतये स्वाहेत्य, भक्षणीयानुपरमेष्ववनयेत्प्राजापत्यो वै सोमः प्रतिष्ठामेवैनङ्गमयति सैव०, यस्य सोममभिदहेद्धाहानध्वर्युः स्पाशयेत, स्तोत्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः, पञ्च वरा देयाः, पङ्क्तो यज्ञो यज्ञमेवावरुन्धेऽवभृथं गत्वा,

४ आज्य.

पुनरुदेत्य पुरा द्वादश्याः पुनर्दीक्षेत, यद्द्वादशीमतिनयेदन्तर्धीयेत तत्र ता दक्षिणा दद्याद्यः पूर्वस्मिन्दास्यं भवति सैव० १६ । सर्वान्वा एषोऽग्नौ कामान्प्रवेशयते योऽग्निमन्वाधाय व्रतमुपैति, स यदनिष्ट्वा प्रयायादऽकामप्रीता एनं कामानानु-प्रयायुरऽतेजा अवीर्यः स्यात्स प्रयास्यं जुहुयात्; तुभ्यन्ता अङ्गिरस्तमविश्वाः सुक्षितयः पृथक्, अग्ने कामाय येमिरे, इति कामानेवास्मिन्दधाति, कामप्रीता एनं कामा अनुप्रयान्ति, तेजस्वी वीर्यवान्भवति, सन्ततिर्वा एषा यज्ञस्य योऽग्निमन्वा-दाय व्रतमुपैति, स यदनिष्ट उद्वयाद्विच्छित्तिरेवास्य सा प्राञ्चमुद्धृत्य मनसोपतिष्ठेत, मन इव वै प्रजापतिः प्राजापत्यो यज्ञो यज्ञमेव सन्तनोति, भूरिति व्याहरेद्भूतो वै प्रजापतिर्भूतिमेवोपैत्यायुषा वा एष वीर्येण वृध्यते, यस्याहिताग्नेरग्निरपक्षा-पयति, स यावच्छस्यया पराविध्येद्यदि तावदपक्षायेत्तं सम्भरेत् ॥ इदन्त एकं पर ऊत एकं तृतीयेन ज्योतिषा संविशस्व, संवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे, इति ब्राह्मणैवैनं सम्भरयति सैव०, यदि परस्तरामपक्षायेदनुप्रियाय, वसे-त्सैव०, ओषधीर्वा एतस्य पयः पशून्प्रविशति, यस्य हविषेऽपाकृतावत्सा धयन्ति

वायव्यां यवागूं निर्वपे, द्वायुर्वै पयसः प्रदाता तमेव भागधेयेनोपधावति, सोऽस्मैपयः प्रयच्छत्यथोत्तरस्मै हविषे वत्सानपावर्त्तये त्सैव० । १७ । अर्धं वा एतस्य यज्ञस्य मीयते, यस्य सायं दुग्धं हविरार्तिमार्च्छतीन्द्राय व्रीहीन्निरुप्योपवसेत्पयो वा ओषधयः पय एवारभ्योपवसति, यत्प्रातः स्यात्तच्छृतं कुर्युरैन्द्र इतरः पुरोळाशः स्यात्पयो वा ओषधयः पयः पयः पयसैवास्मै पयः प्रदापयत्यथोत्तरस्मै हविषे वत्सानपावर्तयेत् सैव०, उभयान्वा एष देवान्भागधेयेत् ऽ्यर्धयति, ये यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति, यस्य सायं प्रातर्दुग्धं हविरार्तिमार्च्छत्योदनं पञ्चशरावं निर्वपेदऽग्निर्देवतानां प्रथमं यजेदग्निमुखा एव देवताः प्रीणात्यग्निं वा अन्वन्या देवता इन्द्रमन्यास्ता एवोभयीः प्रीणात्यथोत्तरस्मै हविषे वत्सानपावर्तये त्सैव०, यत्कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानः स्याद्यदनायतने निनायेदनायतनः स्यान्मध्यमेन पर्णेन द्यावापृथिव्यावर्चन्तः परिनिनयेत् द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनं गमयति सैव०, यत्प्रयाजेष्वऽनिष्टेषु प्राङ्ङ्गारःस्कन्देदऽध्वर्यवे च, यजमानाय चाकं स्याद्यद्दक्षिणा ब्रह्मणे च

यजमानाय चाकं स्याद्यत्प्रत्यङ् होत्रे च पत्न्यै चाकं स्याद्यदुदङ्ङ्निधे च यजमानस्य च पशुभ्योकं स्यात्तं प्रहरेत्, सहस्रशृङ्गो वृषभो, जातवेदः स्तोमपृष्ठो घृतवान्सुप्रतीकः मा मा हिंसीन्नाथितो नेत्त्वा जहानि, सहस्रपोषं मे गोपोषं च यच्छ इति ब्राह्मणैवैनं प्रहरति सैव०, अर्धं वा एतस्य यज्ञस्य मीयते यस्य व्रतेन्हपत्न्यानालम्बुका भवति, तामपरुध्य यजेत, सर्वेणैव यज्ञेन यजेत तामिष्टोपह्वयेत, सा त्वमस्य मोहममोहमस्मि सा त्वम्, ता एहि संरभावहै, पुंसे पुत्राय कर्तव्ये रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय, इत्यर्ध एवैनामाभजति सैव०, १८ यदवृष्टेन जुहुयादपरूपमस्मात्संजायेत, यत्प्रत्येयात्पापीयान्स्याद्यन्न जुहुयादार्तिमार्च्छेत्, मित्रो जनन्यातयति प्रजानन्मित्रो दधार पृथिवीमुतद्याम्, मित्राकृष्टी रनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम, इति मैत्र्यर्चा समिधमाधाय होतव्यं मित्रो वै यज्ञस्य शान्तिर्मित्रेणैवैनं शमयति तद्धुत्वाऽथान्यां दुग्ध्वा पुनर्होतव्यं सैव०, यत्कीटावपन्नेन जुहुयाद॒प्रजा अपशुर्यजमानः स्या, द्यन्न जुहुयादार्तिमार्छेत्प्रजापत्ययर्चा वाल्मीकवपायामवनये, त्प्राजापत्यो वै वाल्मीको यज्ञः, प्रजापति-

यज्ञ एव यज्ञं प्रतिष्ठापयति, तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यं सैव०, यदि पूर्वस्यामाहुत्यां हुतायामुत्तराहुतिःस्कन्देद्द्विपद्भिः पशुभिर्यजमानो वृज्यते, यदभिजुहुयाच्चतुष्पाद्भिः पशुभिर्यजमानो वृज्यते, यत्र वेत्थ वनस्पते देवानां गुह्या नामानि तत्र हव्यानि कामय, इति वानस्पत्ययर्चा समिधमादाय होतव्यं, वनस्पतिनैवास्यान्तां चानान्तां चाहुतीः विदाधार, तद्धुत्वाऽथान्यां दुग्ध्वा पुनर्होतव्यं सैव०, १९ ॥
देवाश्चवाऽसुराश्चास्मिंल्लोके आसन्प्रजापतिरकामयत, परासुरान्न देयं प्रजा सृजेयेति, स एतानि चातुर्मास्यान्यपश्यत्स चातुर्मास्यैरेवासुरान्प्रनुदत, चातुर्मास्यैः प्रजा असृजत, य एवं विद्वांश्चातुर्मास्यैर्यजेत, परा भ्रातृव्यं नुदते,प्र प्रजया प्रपशुभिर्जायते,ऽग्निष्टोमाद्वैश्वदेवं यज्ञक्रतुर्निर्माय प्रजापतिः प्रजा असृजतोक्ता वरुणप्रघासान्यज्ञक्रतुं निर्माय, प्रजा वरुणेन ग्राहयेदतिरात्रात्साकमेधान्यज्ञक्रतुर्निर्मायेन्द्रो वृत्रमऽहन्वैश्वदेवेन वै सोऽसुरान्प्राणुदत, वैश्वदेवेन प्रजा असृजत, सृष्टा वै अन्याः प्रजा आसन्नसृष्टा अन्या,अथ प्रजापतिरकामयत, प्रजाः सृजेयेति, संवत्सरो वै यज्ञो यज्ञः प्रजापतिः, स एते आत्मनोधिपयसी निरमिमीतो धान्यं

च वह्यं चाथैताभ्यो देवताभ्य एतानि हवींषि भागं निरवपत्तैः प्रजा असृजत तेभ्यो वैताः प्रजाः प्रजायन्ततैव एतानि पञ्च हवींषि पञ्च ह्यृतवस्तत एवं प्रजायन्ते,ऽग्नि-रेव प्रावापयत्सोमो रेतो दध्यान्मिथुनं वा अग्निश्च सोमश्च सविता प्रासुवत्संवत्सरो वै सविता द्वादश मासाः संवत्सरस्तस्माद्द्वादशकपालोऽथो वैश्वदेवत्वायैव द्वादश-कपाल उपांशु यजत्यनिरुक्तो हि संवत्सरः सरस्वत्यैव सृष्ट्वा सुवाचमदधा, त्पूषाणं प्रतिष्ठामभ्यसृजन्त, वाग्वै सरस्वती पशवः पूषा मिथुनं, वाक्च पशवश्च मध्यतो वै प्रजा विसृज्यन्तेऽन्ततो मिथुनाद्विषूचीः प्रजायन्ते, तदेतत्प्रजापतेरेवाधिमध्यतः प्रजा विसृज्यन्ते,ऽथोदोत्ततो मिथुनादुभयतो विषूचीः प्रजायन्ते (तेजोसि) वातघ्नानि वा एतानि हवींषि अग्निना वा अनीकेनेन्द्रो वृत्रमहन्सोमेन राज्ञा सवित्रा प्रसूत सरस्वत्या चैत्र्या पूषावीर्यैरवतिष्ठत विजितिरेवैतानि हवींषि ॥ इति श्रीयजुषि काठके चरकशाखायामुपमिकायां नाम प्रायश्चित्तस्थानकं पञ्चत्रिंशं संपूर्णम् ॥ प्रायश्चित्तं पठेद्यो वै प्रातरुत्थाय मानवः । अश्वमेधसहस्राणां फलं सर्वशुभप्रदम् । हुनेद्यो वै सदा मर्त्यो यज्ञे नैमित्तिके परम् । नित्यपापाद्विनिर्मुक्तिर्याज्ञिकस्य द्विजस्य च । तस्म

त्पठेद्धुनेन्मर्त्यो नित्ये नैमित्तिके तथा । अगम्यमगमनादिभ्यो मुक्तो याति परं पदम् । अभक्ष्यभक्षणादिभ्यो स्वग्राह्यग्रहणादितः । अकार्यकरणाच्चैव स्वकर्माणि विलोपकः । स्वधर्मपङ्क्तिनाशाय स्वकर्माणि च निन्दकः । एतैः पापैर्विनिर्मुक्तिर्विष्णुसायुज्यमाप्नुयात् अनेन० भागवान्वासुदेवः प्रीयतां प्रीतोस्तु ॥

## अथाषाढमाघकार्तिकवैशाखमासव्रतोद्यापनम् ।

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षिणे विष्णुप्रतिमां वेदचतुष्टयं क्षेत्रेशद्वयं च संस्थाप्य । पञ्चगव्येन शुद्धिं विधाय ॥ प्रधानं कलशे । अग्नयेनमः, वा० सू० ब्र० प्र० कूष्मर्षिभ्यः । ॥६॥ अतो देवा० प्रतद्विष्णुः० । तद्विष्णुः० वासुदेवाय नमः ॥ ८ ॥ प्रतिमायाः । पुरुषसूक्तं ऋचः १६ शेषशायिने नारा० । चतुर्वेदेषु । यो रुद्रो० । अग्निमीळे० । इषे त्वोर्जे० । अग्न आयाहि० । शन्नो देवी० । यजमानमानीय । अ नाभौ । अद्यतावत् महागणपतये० अग्नये० वासुदेवाय ॥ ८ ॥ शेषशायिने नारायणाय रुद्राय जलधेनुविषये । विष्णवे वा सानुचराय पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय वायवे यजुर्वेदाय ब्र० छ० । दिवे सूर्याय सामवे० ब्र० छ० । दिग्भ्यः चन्द्रमसे अथर्ववे०

ब्र०छ०। इन्द्रायवज्रहस्ताय दीपधूपः। गायत्र्यै नमः ३ नमोऽस्त्वनन्ताय इति सर्वां विष्णुगायत्री आत्मनो० त्रयोदश्यां दशमीनक्तव्रतनि० चतुर्दश्यामेकादशीव्रतोपवासनि० पूर्णमास्यां द्वादशीपारणनिमित्तं अमुकमासव्रतोद्यापननिमित्तं कलशपू० दिक्पालपू० ग्रहमण्डलपू० शेषशायिपू० चतुर्वेदेश्वरपू० क्षेत्रेश्वरपूजनमर्चां० । दक्षिणान्तं । अथाग्निकर्म । आज्यभागान्तं । मेधातिथिर्ऋषिः गायत्री छन्दः । विष्णुर्दे० समिद्धोमे विनि० । अतो देवा० १०८ ध्यानं । नि ष्वसीद० प्रधानं । अतो देवा० इत्यादि । ततोऽन्नहोमः । प्रजापतिः ऋ० । गा० छ० । विष्णुर्दे० । अन्नहोमे वि० । तद्विष्णोः १०८ ध्यानं । नि ष्वसीद । एवमाज्यहोमः । काण्वायन ऋषिः । त्रिष्टुप्छ० । विष्णुर्देवता आज्यहो० । प्र तद्विष्णु स्तवते० १०८ ध्यानं० नि ष्वसीद । तर्पणम् । विष्णुपञ्चकं ( पृ० १-१ ) । कूष्माण्डं सार्धं ( पृ० ६६-५ ) च । ता न आपः शंस्योना भवन्तु इत्यन्तं कूष्माण्डब्रह्माणं ( पृ० ७७-९ ) च हुत्वा चतुर्गृहीतेनाऽग्नये स्वाहेति षट् प्रधानानि । ततो यवतिलहोमः । ओंकारो यस्येति व्याहृतिहोमः । अतो देवा १०८ ऋतुपतिं हुत्वा प्रायश्चित्तस्थानकं ( पृ० ८७-९ )

**सहस्रशीर्षा १६ विष्णुवुधसूक्तं ।** तर्पणं । **यो रुद्रो इत्यादि पञ्चायतनं । इन्द्रा पर्वता** इति सूक्तानि । **रुद्रपञ्चकादि । नैवेद्य** मनु । ( पृ० ७६–१ ) **वैश्वानरे**-त्युपस्थानम् । पुनः **कूष्माण्डानि कू० ( पृ० ६९–४ ) सौत्रामण्या** तावत् । **वैश्वानराये**ति तर्पणम् । **इळामग्ने० पूर्णां** विना । **वैश्वदेवं ।** स्विष्टकृतं विना । **गोदानं ब्राह्मणपूजनं । गायत्र्यै नमः ३ विष्णु**गायत्री । **अग्नेः** वायोः० **६ ऋतुपतेः० त्रयोदश्यां दशमी० अमुकमासव्रतोद्यापनाच्छिद्रनिमित्तं ब्राह्मणपू० ।** दक्षिणान्तं । **एता देवता** विना । **क्षेत्रेशबलिः । विष्णुप्रतिमा** विसर्जनं । **तस्यां** क्षमापुष्पाणि । **आपन्नोस्मि० । ध्येयः सदा० । नमस्तेऽस्तु हृषीकेश पद्मनाभाय विष्णवे । दामोदर नमस्तुभ्यं केशवाय नमो नमः ॥ १ ॥ गोविन्दाय नमस्तुभ्यं विश्वरूपाय ते नमः । मधुरिपो नमस्तुभ्यं त्रिविक्रम नमो नमः ॥ २ ॥ नमो वामनरूपाय श्रीधराय नमो नमः ।** व्रतेनानेन सन्तुष्टः प्रीयतां **मधुसूदनः ॥ ३ ॥ अनर्घ्यः सर्वदेवेभ्यः सप्तर्षिभ्यस्तथैव च ।** व्रते० **मम केशवः ॥ ४ ॥ रुक्मिणीपतिः सर्वेशो नम्रः सर्वैः सदानवैः ।** व्रते० **गरुडध्वजः ॥ ५ ॥ नीलाञ्जनगि-**

रिप्रख्यः शंखचक्रगदाधरः । व्रते० मम शान्तिदः ॥ ६ ॥ दैत्यानां मारणे युक्तो नरकार्णवशोषकः । व्र० कूर्मरूपभृत् ॥ ७ ॥ उद्धृता भूः पुरा येन पाताला-जलमध्यतः । व्र० पृथिवीधरः ॥ ८ ॥ हिरण्याख्योसुरो येन वक्ष उत्पाट्य मारितः । व्र० नरकेसरी ॥ ९ ॥ शक्रानुजो महासत्त्वस्त्रिजगद्धारको विभुः । व्र० वासवानुजः ॥ १० ॥ पर्वताधिपती रामः क्षत्रान्तकरणोद्यतः । व्र० जमद-ग्निभूः ॥ ११ ॥ बद्ध्वा सेतुं समुद्रस्य रक्षोघ्नो रघुवंशजः । व्र० रावणान्तकः ॥ १२ ॥ वसुदेवात्मजः श्रीमान्दानवारिर्महाबलः । व्र० कृष्णरूपधृक् ॥ १३ ॥ कलौ छन्नवपुर्देवो योगनिद्रामिषात्प्रभुः । व्र० बुद्धरूपभृत् ॥ १४ ॥ नीलाम्ब-रधरो विष्णुर्हृषीकेशोतिदुष्टहृत् । व्र० कार्किरूपभृत् ॥ जगदुद्धारको भक्त्या नाना-भयवरप्रदः । व्रतेनानेन सन्तुष्टः प्रीयतां मधुसूदनः ॥ विश्वरूपो महाकायः सृष्टि संहारकारकः । ब्रह्माथ भास्करः शम्भुः सर्वव्यापी महेश्वरः । शिव इन्द्रो कुमारोथ मनुरात्रेयनारदौ । कश्यपश्च तथा व्यासो याज्ञवल्क्यवसिष्ठकौ ॥ कपिलो वाम-देवश्च व्रतेनानेन तर्पिताः ॥ संसारपाथोनिधितारणाय निःशेषभूतोदयकारणाय ।

नमोन्तकत्रासनिवारकाय विपक्रमोन्मूलनवारणाय ॥ अच्युतानन्तगोविन्द वैकुण्ठ गरुडध्वज । विष्णो पीताम्बरधर वासुदेव नमोस्तु ते ॥ यस्य हस्ते गदाच० ॥ ईप्सितं मे देहि कामं पुत्रांश्च वाञ्छितं धनम् । सन्तुष्टो देहि मे नित्यं भगवन्भक्तवत्सल ॥ जप्तो ध्यातः श्रुतो नित्यं भुक्तिमुक्तिप्रदो भव । कर्मणा मनसा वाचा यौवने वार्द्धकेपि वा ॥ यन्मयोपार्जितं पापं तत्सर्वं हर मे हरे ॥ गर्भवासेथवा बाल्ये यत्कृतं पापसञ्चयम् । तं मे नाशय देवेश भोगमोक्षौ ददस्व मे ॥ निमग्नोहं भवाम्भोधौ मोहकच्छपसङ्कुले । विषयोरगदष्टोऽस्मि पाहि नारायण प्रभो ॥ १ ॥ वित्तोपार्जनकार्यैस्तु चिन्ताशतसमाकुलः । पुण्यहीनशरीरोहं पाहि० ॥ २ ॥ कान्ताकटाक्षविशिखैर्नष्टचेताः प्रलोभवान् । मोहनष्टविवेकोहं पाहि० स्वामिन्मोहसुरापानक्षीबेण जन्म निष्फलम् । कृतं किमद्य करवै पाहि० ॥ ४ ॥ करणग्रामचौरैर्मे हृतं ज्ञानधनं बलात् । कीनाशपाशत्रस्तं मां पाहि० ॥ ५ ॥ पुण्यैर्नोपार्जितं धर्मं नो कृतं मुक्तिसाधनम् । संसारमायया क्रान्तं पाहि० ॥ ६ ॥ कृपाम्बुधे हि चिन्ताग्निशान्त्यर्थं शरणं तव । प्रपद्येऽनन्यशरणं पाहि० ॥ ७ ॥

कालानुचरहुङ्कारनष्टेन्द्रियगतिं हरे । करुणाक्रन्दमानं मां पाहि० ॥ ८ ॥ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् । इति शेषां समादातु शिरस्यादाय सत्वरम् ॥ ९ ॥ नमो ब्रह्मणे इति तर्पणम् ॥ आदौ जलकुम्भदानं ॥ सावित्राणि० आत्मनो० अमुकमासव्रतोद्यापननिमित्तं जलकुम्भं सहिरण्यं सान्नं सवस्त्रं ददानि ॥ ३ ॥ ततो विष्णुप्रतिमा होत्रे ॥ सावित्राणि० यथोक्तफलवृद्ध्यर्थं मनोवाक्कायज्ञाताज्ञाताशेषपापक्षयार्थं ऐहिकामुष्मिकफलभूतायुरारोग्यादिप्राप्त्यर्थं च त्रयोदश्यां दशमीनक्तव्रतनि० चतुर्दश्यां एकादशीव्रतोपवासनि० पूर्णमास्यां अमुकमासव्रतोद्यापननिमित्तं श्रीसहिताय जनार्दनाय, विभूतिस० मधुसूदनाय । इमां श्रीस० जनार्दनविभूतिस० मधुसूदनप्रतिमां सहिरण्यां सवाससं सान्नां ददानि ३ प्रतिगृह्णामि ॥ ततो दध्यक्षतैस्तिलैस्तर्पणं । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तृप्तिमायान्तु ते सर्वे अमुको ( माघस्यो–वैशाखो–आषाढो–कार्तिको वा ) द्यापनाद्धरे ॥ १ ॥ नागलोकगता ये च हाटकेशार्चने रताः । तृप्ति० ॥ २ ॥ अत्रिर्वसिष्ठः पुलहः कश्यपो गौतमो भृगुः ॥ तृ० ॥ च्यवनो व्याघ्रपाद्विष्णुर्देवलो

लोमहर्षणः । तृ० । कश्यपो वै दीर्घतपाः पाराशर्यपराशरौ । तृ० । विश्वामित्रोऽथ जाबालिर्भारद्वाजश्च शौनकः । तृ० । कण्ठोपवीती । सनन्दः पिप्पलादश्च वोढः पञ्चशिखस्तथा । तृ० । याज्ञवल्क्यो मनुर्दक्षः सनकात्रिमरीचयः । तृ० । लौगाक्षिः कपिलः काण्वो हारितो जमदग्नयः । तृ० । आपस्तम्भः सुमन्तुश्च बौधायनबलायनौ । तृ० । अपसव्येन । पिता पितामहश्चैव तथैव प्रपितामहः । । तृ० । माता पितामही चैव तथैव प्रपितामही । तृ० । श्वश्रूः स्वसा गुरुपत्नी भार्या मित्रं च बान्धवः । तृ० । ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । अवीच्यन्तर्गता ये च कुम्भीपाके च ये स्थिताः । तृ० । सव्येन । नमो देवेभ्यः० ॥ एता देवताः० ॥ ब्राह्मणाच्छिद्रं ॥ पूर्णां दत्वा । अग्नये स्विष्टकृते । विमुञ्चामि ॥३॥ धर्मं देहि । कलशाच्छिद्रं ॥ आपन्नोसि । उदकलशं । सुरास्त्वामभि० ॥ पृ० १०९–२ घृतपात्रं (पृ० १३५–४) सङ्कल्पयेत् । सावित्राणि० आत्मनो० श्रीविष्णुप्रीत्यर्थं इदमाज्यपात्रं देवप्रीत्यै सङ्कल्पयामि ॥ इति आषाढमाघकार्त्तिकवैशाखमासव्रतोद्यापनं ॥

## अथ तुलादानविधिः ।

अश्मचूर्णेन ग्रहमण्डलं तद्दक्षिणतो दश दिक्पालांस्तन्मध्ये वेदचतुष्टयं चोल्लिख्य । प्रधानं । गणानान्त्वा । विनायकाय० । ये के चज्मा० । यो रुद्रो० । यो विश्व-चक्षु० । ब्रह्मा देवानां० । प्र तद्विष्णु० । वनस्पतिर्विदाङ्गोहि भूयादस्मत्सखा प्रतरणः स्ववीरः । गोभिः सन्नद्धो असि वीरता इव स्वस्वार्जिर्बीजयतु जित्वानि । दिक्पालेषु ॥ इन्द्रा पर्वता० । ऋ १० । वेदचतुष्टयेषु । यो रुद्रो० ऋ० ५ । तद्वि-ष्णोरित्यादि ॥ अ नाभौ० । अद्य तावत् महागणपतये० विनायकाय० ब्रह्मविष्णु-महेश्वरेभ्यः । अष्टाभ्यो वसुभ्यः । एकादश रुद्रेभ्यः । द्वादशादित्येभ्यः । एकोन-पञ्चाशन्मरुद्गणेभ्यः । वनस्पतिदेवताभ्यः इन्द्रादिदिक्पालेभ्यः रुद्राय सानुचराय । पृथिव्यै, अग्नये, ऋग्वेदाय, ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय, वायवे,-यजुर्वे,ब्र० छ० । दिवे, सूर्याय, सामवे० ब्र० छ । दिग्भ्यः, चन्द्रमसे, अथर्ववे० ब्र० छ० विष्णुपञ्चा-यतनदेवताभ्यः । आत्मनः सपत्नीकस्य सपुत्रस्य स्वर्गापवर्गसिद्ध्यर्थं अमुकराशिग्र-हपीडानिवारणार्थं तुलापुरुषदाननिमित्तं दीपधूपः ॥ गायत्र्यै नमः ॥ ३ ॥ महागण-पतेः० कलशपू० दिक्पालपू० चतुर्वेद० पू० अहमहं करिष्ये ॥ कलशावाहनमनुदि-

कपालावाहनम् ( आवाहयेल्लोकपतीन्क्रमेण मंत्रैरमीभिर्यजमानवर्यः ) । पूर्वे । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरोऽमरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते । इन्द्राय नमः । इन्द्रा पर्वता । आग्नेये । एह्येहि वैश्वानर हव्यवाह मुनिप्रवीरैरभितोऽभिजुष्टः । तेजोवता लोकगणेन सार्धं ममाध्वरं रक्ष विभो नमस्ते । अग्नयेनमः । अग्निं सप्तिं० । दक्षिणे । एह्येहि वैवस्वत लोकनाथ सर्वामरैरर्चित दिव्यमूर्ते । शुभाशुभाचारविचारसाक्षिन् शिवाय नः पाहि मखं नमस्ते । यमाय नमः । यमो दाधार० । नैर्ऋते । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः । ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते । निर्ऋतयेनमः । यन्ते देवे० । पश्चिमे । एह्येहि यादोगणवारिधीनां गणेश पर्जन्ययुतः प्रचेतः । विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान्भगवन्नमस्ते । वरुणायनमः । उदुत्तमं । वायवे । एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः । समीरण प्राणवतीसहायो गृहाण पूजां भगवन्नमस्ते । वायवेनमः । वायवायाहि । उत्तरे । एह्येहि यक्षेश्वर यज्ञरक्षां कुरुष्व यक्षादिगणेन साकम् । सर्वैर्निधीशैः सह भूतसंघैर्गृहाण पूजां भगवन्नमस्ते । कुबेरायनमः । सोमो धेनुं । ईशाने । एह्येहि विश्वेश्वर नस्त्रिशूलकपाल-

खट्वाङ्गवरैश्च साकम् । भूतेश लोकेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते । ईशानायनमः । ईशानन्त्वा० । ऊर्द्ध्वे । एह्येहि विश्वाधिपते मुनीन्द्रलोकेन सार्धं पितृदेवताभिः । चतुर्मुख त्वं भव नः शिवाय पितामहायाद्य विभो नमस्ते । ब्रह्मणेनमः । ब्रह्म जज्ञानं । अधः । एह्येहि पातालधराधरेन्द्रनागाङ्गनाकिन्नरगीयमानः । रक्षोगणेन्द्रामरलोकयुक्तोप्यनन्त रक्षाध्वरमस्मदीयम् । विष्णवेनमः । आयङ्गौः पृश्निरक्रमीदसन्मातरं पुनः पितरं च प्रयत्सुः । वषट्ते० । मध्ये । आवाहयाम्यहं देवं रुद्रं ( विष्णुं ) सानुचरं विभुम् । चतुर्वेदेश्वरं श्रेष्ठं मध्ये तिष्ठन्तमव्ययम् । रुद्राय ( विष्णवे ) सानुचराय । यो रुद्रो० ( प्र तद्विष्णुः ) पूर्वे । आवाहयामि पृथिवीमग्निना संयुतां शुभाम् । ब्रह्माणं पूर्वतो देशे छन्दांसि सर्वसिद्धये । पृथिव्यै अ० ऋ, ब्र, छ, अग्निमीळे । दक्षिणे । आवाहयाम्यन्तरिक्षं यजुर्वेदं च मारुतम् । ब्रह्माणं दक्षिणे देशे छन्दांसि सर्वसिद्धये । अन्तरि, वा, य, ब्र, छ, । इषे त्वा० । पश्चिमे । दिवमावाहयिष्यामि सूर्यसामसमन्विताम् । ब्रह्माणं पश्चिमे देशे छन्दांसि सर्वसिद्धये । दिवे, सू, सा, ब्र, छ । अग्न आयाहि । उत्तरे । दिशश्चन्द्रमसं देवमथर्वणयुतं शुभम् । आवाहयामि ब्रह्माणं छन्दांसि चोत्तरे दिशि । दिग्भ्यः,

**चन्द्रमस अ, व, छ । शन्नो देवी** ॥ दक्षिणान्तं । **अथाग्निकर्म** । अग्निकुण्डपूजादि । समिदन्नाज्यभागं पञ्चकत्रयं रक्षोघ्नमंत्राश्च हुत्वा **ऋतुतिथिः । नैवेद्यं । ब्राह्मणपूजनं** विना । **तुलापूजनं यथा ।** तुलामध्ये **हिरण्मयं तुलापुरुषं विष्णुरूपं स्थापयेत् । सं त्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः ३** दक्षिणपदे **सूर्यस्य** वामे **सोमस्य** । द । **यमस्य** । वा । **वरुणस्य** । आधाररज्जौ द । **वासुकेः** । वा । **पुष्कराख्यस्य** । दण्डविवरे । द । **धर्मस्य** । वा । **अधर्मस्य । मध्ये । ध्रुवस्य विष्णोः** । आधाररन्ध्रदण्डे । **इन्द्रस्य वज्रहस्तस्य ॥ १० ॥ तुलापुरुषस्य विष्णोः** आत्मनो० **तुलादाननिमित्तं तुलापूजनमर्चामहं करिष्ये । आवाहयामि वरदं सहस्रांशुं दिवाकरम् । तेजोमूर्तिं दुराधर्षं ऋक्सामयजुषां पतिम् । त्रैलोक्यमण्डपे दीपं सर्वव्याधिविनाशनम्** । रक्तवर्णो० । **आवाहयामि वै चन्द्रं मृगाङ्कं नीलवाससम् । नक्षत्रेशं क्षपानाथं सर्वाप्यायकरं विभुम्** । शुक्लवर्णो० । **आवाहयाम्यहं देवं धर्मराजं महाबलम् । महिषासनमारूढं दण्डहस्तं भयानकम्** । कृष्णव० ॥ **आवाहयाम्यहं देवं वरुणं यादसां पतिम् । पाशहस्तं वारिधीशं द्विभुजं मकरासनम्** । नीलवर्णो० ॥ **आवाहयाम्यहं देवं वासुकिं नागराजकम् । अग्रणीमां सर्वभूतानां विष्णुरूपं शिव-**

-प्रियम्। शुक्लव० ॥ आवाहयाम्यहं देवं पुष्कराख्यं मनोहरम्। तेजोरूपं समस्तानां देवानां च सदाप्रियम् ॥ शुक्लव० ॥ आवाहयाम्यहं देवमधर्मं दुर्जनप्रियम्। दुर्गतिफलदं तेषां शमने शङ्करं प्रभुम् ॥ कृष्ण० ॥ आवाहयाम्यहं देवं ध्रुवराजं महाबलम्। औत्तानपादिं राजानं ग्रहाणां प्रवरं सदा। पीत० ॥ आवाहयाम्यहं देवं ब्रह्मविष्णुमहेश्वरम्। त्रिमूर्तिं च त्रिदेवेशं रक्तं पीतं च निर्मलम्। त्रिवर्णोयं महातेजास्त्रयस्त्रग्धामभूषितः ॥ भग०। दक्षिणान्तम्। ततो दिक्पालवेदेश्वराच्छिद्रम् ॥ गायत्र्यै नमः ॥ ३ ॥ इन्द्रस्य, अग्नेः, यमस्य, नैर्ऋतेः, वरुणस्य, वायोः, कुवेरस्य, ईशानस्य, ब्रह्मणः, विष्णोः। रुद्रस्य, वा ( विष्णोः। ) सानुचरस्य। पृ, अ, ऋ, ब्र, छ। अ, वा, य, ब्र, छ,। दि, सू, सा, ब्र, छ,। दिशां, च, अ, ब्र, छ। आत्मनो० दशदिक्पालपूजनं चतुर्वेदेश्वर०। यवोदकं अपत्नो०। ऐरावणसमारूढं स्वर्णवर्णं किरीटिनम्। सहस्रनयनं शक्रं वज्रहस्तं विभावयेत् ॥ १ ॥ सप्तार्चिषं तु बिभ्राणमक्षमालाकमण्डलुम्। रक्तं ज्वालाकुलं ध्यायेच्छक्तिहस्तमजासनम् ॥ २ ॥ कृतान्तं महिषारूढं दण्डहस्तं भयानकम्। कालपाशधरं ध्यायेत्कालं दक्षिणदिक्पतिम् ॥ ३ ॥ रक्तनेत्रं शवारूढं नीलोत्पलदलप्रभम्। कृपाणपाणिमस्रौघं

पिबन्तं राक्षसं स्मरेत् ॥ ४ ॥ नागपाशधरं हृष्टं रत्नौघद्युतिविग्रहम् । शशाङ्कधवलं ध्यायेद्वरुणं मकरासनम् ॥ ५ ॥ आपीतमरुणच्छायं स्मरेद्वै ध्वजधारिणम् । प्राणभूतं च भूतानां हरिणस्थं समीरणम् ॥ ६ ॥ कुबेरं मेषमारूढं सर्वगं सर्वविग्रहम् । स्वर्णच्छायाङ्गदाहस्तमुत्तराधिपतिं स्मरेत् ॥ ७ ॥ ईशानं वृषभारूढं त्रिशूलव्यालधारिणम् । शरच्चन्द्रावतंसं च त्र्यक्षं ध्यायेद्विधुप्रियम् ॥ ८ ॥ पीनं पीतं चतुर्बाहुं हंसयानं चतुर्मुखम् । अजं ध्यायेद्धि बिभ्राणं दण्डाक्षस्रक्कमण्डलुम् ॥ ९ ॥ अनन्तं पुण्डरीकाक्षं कूर्मासनं विचिन्तयेत् । शङ्खं चक्रं गदां खड्गं बिभ्राणं च चतुर्भुजैः ॥१०॥ आह्वानं । नमो ब्र । तानेव तुलायाः परितः । एह्येहि सर्वा० पृ० १०९–१२ । पठन्क्षिपेत् । तेषां मध्ये वेदचतुष्टयं च ॥ नमस्कारः । त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः साकं रक्षां कुर्वन्तु मां सदा ॥ १ ॥ देवदानवगन्धर्वयक्षराक्षसपन्नगाः । ऋषयः पितरो गावो देवमातर एव च ॥२॥ ममाध्वरंतुते सर्वे रक्षां कुर्वन्तु दर्शिताः । त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥ ३ ॥ ततो मङ्गलशब्देन नादितो नरपुङ्गवः । शुक्लमाल्याम्बरधरस्तां तुलामनुमन्त्रयेत् ॥ ४ ॥ शन्न इन्द्राऽग्नी पृ० ८१–८ इत्यादि शन्नो रजसस्पतिरस्तु जिष्णुरित्यन्तम् । "ऋचः ५"

पठन् तुलायां पुष्पाञ्जलिं क्षिपेत् । पुनश्च । नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता । साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ॥१॥ एकतः सर्वपापघ्नी चैकतोऽनृतहा तथा । धर्माधर्मकृतौ मध्ये स्थापितासि जगद्धिते २ त्वं तुले सर्वभूतानां प्रमाणमिति कीर्तिता । मां तोलयन्ती संसारादुद्धरस्व नमोस्तु ते ॥३॥ योऽसौ तत्त्वाधिपो देवः पुरुषो नादिमान्स्वयम् । स एषोधिष्ठितो देवि त्वया तस्मान्नमो नमः ॥ ४ ॥ नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक । त्वं हरे तारयस्वास्माद्घोरात्संसारसागरात् ॥ ५ ॥ नमस्ते सर्वदेवानां साक्षिभूते सनातने । पितामहेन देवेशि निर्मितासि जगद्धिते ॥६॥ पुण्यकालं समासाद्य कृत्वैवमधिवासनम् । पुनः प्रदक्षिणं कृत्वा तुलां तामारुहेत्पुनः ॥ ७ ॥ सखड्गचर्मकवची सर्वाभरणभूषितः । धर्मराजं समादाय हेमसूत्रेण भूषिताम् ॥ ८ ॥ कराभ्यां बद्धमुष्टिभ्यां तिष्ठेत्पश्येद्धरेर्मुखम् । तत्रोपरि तुलाभागे न्यसेत्स द्विजपुङ्गवः ॥९॥ सर्वं धान्यादि तद्यावत्काञ्चनादि च निर्मलम् । मुक्तिकामस्तु कुर्वीत भूमिसंस्थो नरोत्तमः ॥१०॥ क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् ॥ त्वया धृतं जगत्सर्वं स्थावरं जङ्गमं च यत् । सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥१॥ नमस्ते सर्वभूतानां साक्षिभूते सनातने । जगद्धिते निर्मितासि ब्रह्मणा ते नमो-

नमः ॥ २ ॥ शन्न इन्द्राग्नी इति वै क्षणमात्रं पुनः पठन् । त्रिः प्रक्रम्य तथाह्य दक्षिणाभिमुखः पठेत् । खङ्गपाणिः शनैः (पृ० ८०–८) सूक्तमवतीर्थं क्षिपेदसिम् । स्नात्वा तुलादक्षिपादे ग्रहान्श्लोकैश्च तर्पयेत् । उदयंस्तु महाभानुरित्याद्यै (पृ० १०५–११)स्ततो ब्रह्मर्षितर्पणम् ॥२॥ ब्रह्मा तृप्यतामित्यादि । गायत्र्यै नमः ३ सूर्यस्य सोमस्य (११३–४) इत्यादि अच्छिद्रम् ॥ यवोदकम् ॥ आपन्नोस्मि । सूर्याय विश्वरूपाय त्रिजगज्ज्योतिरूपिणे । सोमाय च नमस्तुभ्यं यमाय वरुणाय च ॥ १ ॥ वासुकिपुष्कराख्याभ्यां नमस्ताभ्यां करोम्यहम् । धर्माधर्मौ ध्रुवं विष्णुं नमस्यामि सदा मुदा २ आह्वानं । नमोब्रह्मणे । अग्नेर्यविष्टपूजनम् । पूर्णा । विमुच्य । पुनः परिसमूह्य ॥९॥ वैश्वदेवं । क्षेत्रेशबलिः । कलशपृच्छां विसर्ज्य । आपन्नोस्मि । उदकलशं ॥ इति तुलापुरुषदानविधिः ।

## ॥ ॐ अथ कन्यासंस्कारविधिः ॥

अश्मचूर्णेन ब्रह्मकलशमुल्लिख्य । ब्रह्मा देवानां० । ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै ७ । गौरीर्मिमाय० । गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै ७ दिव्यं सुपर्णं० । देवसेनायै स्वाहायै स्वधायै मातृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै । जातवेदसे० । पुष्ट्यै आत्मदेवतायै । ये के च ज्मा० ॥

ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगाह्यै भगाक्ष्यै ८ राका-महं० । अनुमत्यै राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वेश्वर्यै अन्नेश्वर्यै ७ यो विश्व-चक्षु० । एकान्तवासिन्यै । क्षेत्रस्य पतिना० । गणानां त्वा० । दुर्गाक्षेत्रगणेश्वर-देवताभ्यः । मातृमण्डलयागदेवताभ्यो नमः । इति देवतवारिप्रधानं ॥ अथकन्या-संस्कारे । ये के च उमा० । सीमन्तकरणदेवताभ्यः । १ । इंद्राणीमासु नारिषु० । नाहमिन्द्राणि रारण० । सट्टोद्धरणदेवताभ्यः । २ । इन्द्राय इन्द्राण्यै कामायै भगायै ह्रियै श्रियै लक्ष्म्यै तुष्ट्यै पुष्ट्यै विश्वावसवे गन्धर्वराजाय गोदान-देवताभ्यः ३ अलक्ष्मीनिर्णोदनदेवताभ्यः ४ ( द्वादशवर्षाधिक्यां कन्यायां रजो-दोषनिवारणार्थं हविष्कल्पं । नान्यथा ) "अर्यम्णे प्रजापतये हविष्कल्पदेवताभ्यः । ५ । इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै अग्नये जीवपुत्राय प्रजापतये महा-राजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्पुण्यदेवताभ्यः ६ । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजा-पतये कन्याहोमयागदेवताभ्यः । ७ । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय

ईशानाय वरहोमयागदेवताभ्यः । ८ । अग्निनारयिमश्नवत्० । प्रजापते० नहि त्वदन्यः० । अग्नये पुष्टिपतये प्रजापतये महाप्रस्थानयागदेवताभ्यः । ९ । कन्यासंस्कारयागदेवताभ्यः । तद्विष्णोः० वासुदेवाय० विष्णुपञ्चायतनदेवताभ्यः । इन्द्रापर्वता० । ऐन्द्राग्नं० ॥ ततो यजमानमानीय । अ नाभौ० । तीर्थे स्तेयं० । यत्रास्ति माता० । अद्यतावत्० महागणपतये० । ब्राह्म्यै० । सीमन्तकरणदेवताभ्यः० । वासुदेवाय० । इन्द्राय वज्रहस्ताय धूपदीपः ॥ अपसव्येन । नमः पितृभ्यः ३ । सव्येन । गायत्र्यै नमः ३ । सुभगायै विद्महे० ३ । अद्यतावत्० । महागणपतेः० । ब्राह्म्याः माहेश्वर्याः कौमार्याः वैष्णव्याः वाराह्याः नारसिंह्याः ऐन्द्र्याः गौर्याः पद्मायाः शच्याः मेधायाः सावित्र्याः विजयायाः जयायाः देवसेनायाः स्वधायाः स्वाहायाः मातॄणां लोकमातॄणां धृतेः तुष्टेः पुष्टेः आत्मदेवतायाः ललितायाः उमायाः अम्बिकायाः गौर्याः सलिलाश्रयायाः भगाह्याः भगाक्ष्याः अनुमत्याः राकायाः सिनीवाल्याः कुह्वाः धान्याः सर्वेश्वर्याः अन्नेश्वर्याः एकान्तवासिन्याः दुर्गाक्षेत्रगणेश्वरदेवतानां मातृमण्डलदेवतानां । सीमन्तकरणदेवतानां सट्टोद्धरणदेवतानां । इन्द्रस्य इन्द्राण्याः कामाख्याः भगाह्याः ह्रियाः

श्रियाः लक्ष्म्याः तुष्टेः पुष्टेः विश्वावसोः गन्धर्वराजस्य गोदानव्रतदेवतानां । अलक्ष्मीनिर्णोदनदेवतानां ( रजोदोषार्थे ) "अर्यम्णः प्रजापतेः हविष्कल्पदेवतानां" इन्द्राण्याः वरुणान्याः गन्धर्वाण्याः उदकान्याः अग्नेः जीवपुत्रस्य प्रजापतेः महा- राजस्य स्कन्दस्य अर्यम्णः भगस्य प्रजानकस्य हविष्पुण्यदेवतानां । अग्नेः सोमस्य मित्रस्य वरुणस्य इन्द्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वाष्ट्रस्यः राज्ञः प्रजापतेः कन्याहोमदेवतानां । अग्नेः सोमस्य मित्रस्य वरुणस्य इन्द्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वाष्ट्रस्यराज्ञः प्रजापतेः कुम्भस्य वैश्रवणस्य ईशानस्य वरहोमयाग- देवतानां । अग्नेः पुष्टिपतेः प्रजापतेः महाप्रस्थानदेवतानां । वासुदेवस्य० । इन्द्रस्य वज्रहस्तस्य० आत्मनो० मातृकादेवीसन्तोषणार्थमर्चामहं करिष्ये । एवमेवासनम् महागणपतये० युष्मान्वः पूजयामि ॐ पूजय । महागणपतिं० । ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं नारसिंहीं ऐन्द्रीं गौरीं पद्मां शचीं मेधां सावित्रीं विजयां जयां देवसेनां स्वधां स्वाहां मातृः लोकमातृः धृतिं तुष्टिं पुष्टिं आत्मदेवतां ललितां उमां अम्बिकां गौरीं सलिलाश्रयां भगाह्वीं भगाक्षीं अनुमतिं राकां सिनीवालीं कुहूं धात्रीं सर्वेश्वरीं अग्नेश्वरीं [illegible] दुर्गाक्षेत्रगणेश्वरदेवताः मातृमण्डल-

देवताः । सीमन्तकरणदेवताः । सट्टोद्धरणदेवताः । इन्द्रं इन्द्राणीं कामां भगां ह्रियं श्रियं लक्ष्मीं पुष्टिं विश्वावसुं गन्धर्वराजं गोदानव्रतदेवताः । अलक्ष्मीनिर्णोदन-देवताः ( रजोदोषार्थं ) "अर्यमाणं प्रजापतिं हविष्कल्पदेवताः" इन्द्राणीं वरुणानीं गन्धर्वाणीं उदकानीं अग्निं जीवपुत्रं प्रजापतिं महाराजं स्कन्दं अर्यमाणं भगं प्रजानकं हविष्पुण्यदेवताः अग्निं सोमं मित्रं वरुणं इन्द्रं उदकं भगं अर्यमाणं पूषाणं त्वाष्टं राजानं प्रजापतिं कुम्भं वैश्रवणं ईशानं वरहोमयागदेवताः । अग्निं पुष्टिपतिं प्रजापतिं महाप्रस्थानदेवताः वासुदेवं० । इन्द्रं वज्रहस्तं० हेरुकादीन्० एता देवता आवाहयिष्यामि० । पाद्यार्थमुदकं नमः । शन्नोदेवी० । महागणपतये० पाद्यं नमः । पुनः शन्नोदेवी० । महागणपते० ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि नारसिंहि ऐन्द्रि गौरि पद्मे शचि मेधे सावित्रि विजये जये देवसेने स्वधे स्वाहे मातरः लोकमातरः धृति तुष्टि पुष्टि आत्मदेवते ललिते उमे गौरि अम्बिके सलिलाश्रये भगाहि भगाक्षि अनुमति राके सिनीवालि कुहु धात्रि सर्वेश्वरि अन्नेश्वरि एकान्तवासिनि दुर्गाक्षेत्रगणेश्वरदेवताः मातृमण्डलदेवताः । सीमन्त-करणदेवताः सट्टोद्धरणदेवताः इन्द्र इन्द्राणि कामे भगे ह्रीः श्रीः लक्ष्मीः तुष्टे पुष्टे

विश्वावसो गन्धर्वराज गोदानव्रतदेवताः "अर्यमन् प्रजापते हविष्कल्पदेवताः" इन्द्राणि वरुणानि गन्धर्वाणि उदकानि अग्ने जीवपुत्र प्रजापते महाराज स्कन्द अर्यमन् भग प्रजानक हविष्पुण्यदेवताः अग्ने सोम मित्र वरुण इन्द्र उदक भग अर्यमन् पूषन् त्वाष्ट्र राजन् प्रजापते कन्याहोमदेवताः अग्ने सोम मित्र वरुण इन्द्र उदक भग अर्यमन् पूषन् त्वाष्ट्र राजन् प्रजापते कुम्भ वैश्रवण ईशान वरहोमयागदेवताः अग्ने पुष्टिपते प्रजापते महाप्रस्थानयागदेवताः । वासुदेव० । इन्द्रवज्रहस्त० । हेरुकादयः इदं वोऽर्घ्यं नमः । दक्षिणान्तं । तद्विष्णोः० । जात वेदसे० इतिच्च कलशेपुष्पम् ॥ **अथाग्निकर्म ॥ अन्नहोमं विधाय ।** गणेशार्थं मृत्पिण्डं देवतगोलिकासप्त **अक्षोटसप्त, घृतधारासप्त, च संस्थाप्य** मातृकाः पूज्याः । **पशूपहारं च** ( पृ० १२५–१३ ) **कृत्वा । रुद्रमंत्रांतंच हुत्वा कन्यास्नानार्थं पीठिकापूजा ।** पूर्वतश्चरणेषु । **धात्र्यै विधात्र्यै विश्ववर्यै विश्वरूपिण्ये ।** मध्ये **शक्तये पीठदेवताभ्यः,** इति **नामभिः ॥** ततः स्नात्वा । **या आपोदिव्याः** ( पृ० ७८–१० ) तिलकमाज्यदर्शनं च कृत्वा **देवीसूक्तं रक्षोघ्नमंत्रं । ऋतुतिथ्यादि तंत्रसमाप्तिः** इतिमातृकापूजनम् । ततः कन्यासंस्कारं ब्राह्मणपूजनं वैश्वदेवं नान्दीमुखादि सर्वं विदध्यात् ॥ **अथ कन्यासंस्कारः ।** तत्र सामग्री । **समिद्द्वयं पुनर्द्वयं**

निर्वणबन्धद्वययुतं केशहस्तयोर्बन्धनार्थं । पुनः तोलशाखां रक्तसूक्तयुतं । कांस्यपात्रं पीठिका कन्यकाश्चतस्रः । कुंकुमचन्दनकर्पूरादि इति ॥ आदौ सीमन्तकरणं ॥ परिसमुह्य ९ आस्तीर्य १६ न निर्वापः । सीमन्तकरणदेवताभ्यः अग्नये वै० इदमाज्यमर्पयामि० । आज्यभागान्तं । कुमारीमानीय । तृतीये गर्भमासे सीमन्तं कारयते शुद्धपक्षस्य-पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । पश्चादग्नेः दर्भेषु प्राङासीनायाः प्रत्यङासीनायाः सर्वान्केशान् संप्रमुच्य प्रसादयते ॥ यं सीमन्तं कङ्कतस्ते चकार यद्वाक्षरः परिवर्ज्यावपांस्ते । स्त्रीषु रूपमश्विनौ तन्विधत्तं पौंस्येनेमं संसृजतं वीर्येण १ इन्द्राणी चक्रे कङ्कतं ससीमन्तं विसर्पतु । पुनः पतिभ्यो जायान्दा अग्ने प्रजया सह २ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम् ३ इति त्रिः श्वेतया शलल्या शमीशाखया सपलाशया ससीमन्तं विचिनोति ॥ यास्ते राक इति पृथक्केशपक्षौ सन्नह्यति । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ नीललोहितेन सूत्रेण केशान्ग्रन्थयेत् । नीललोहितं भवति कृत्वा सक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बध्येषु बध्यताम् । या आपो दिव्याः । ये के च जमेत्याज्यप्रधानं ।

ऋतुतिथिः विमुच्य १ ॥ अथ सट्टोद्धरणम् ॥ परिसमूह्य ५ परिस्तीर्य १६ न निर्वापः । सट्टोद्धरणदे० अग्नये वै० इदमाज्यम० । आज्यभागान्तं । आज्येन प्र० । इन्द्राणीमासु० । नाहमिन्द्राणि० । ऋतुतिथिः । विमुच्य ॥ २ ॥ अथ गोदानम् ॥ परिसमूह्य ४ परिस्तीर्य १६ इन्द्राय इन्द्राण्यै कामायै भगायै ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै विश्वावसवे गन्धर्वराजाय गोदानयागदे० जुष्टं निर्वपामि । आज्यभागान्तं । ततः कांस्यपात्रे हिरण्यमलङ्करणीयं सर्वं समुत्क्षिप्य यजमानहस्तेन हिरण्यवर्णा १ यासां दे० ३ यासां राजा० ४ शिवेन मा० ४ इति चतसृभिरभिषिच्य वध्वाः संकल्पं दध्यात् सावित्राणि० अद्य तावत्० आत्मनो० कन्योद्वाहनिमित्तं सूर्यदैवतं सौवर्णं चन्द्रदैवतं रौप्यं अग्निदैवतं कांस्यादि सर्वमलङ्करणीयं प्रजाभ्यस्त्वा ददानि ३ सावित्राणि रायस्पोषाय त्वा प्रतिगृह्णामि ३ ततो गोदानिकैर्मन्त्रैः कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे दक्षिणतोऽग्नेः प्राङासीनामुपविश्य अविधवाः स्त्रीचतस्रः माता पिता गुरुश्च सप्तमः । तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाऽऽहतेन वाससा प्रच्छाद्य। सावीर्हि (पृ० १०७–१३) शुक्लं पवित्रं वस्त्रं कुङ्कुमकर्पूरादिभिर्विप्रहस्तेनाभिषेचनम् हिरण्यवर्णाः ४ आपो हि ष्ठा ३ येनव्याघ्रं परि० । प्रधानं इन्द्राय ११ प्रधानान्तर ( टीर ) समिधा शुनं वहेति । शुनं वह शुनं

नराः शुनं कृषतु लाङ्गलम् । शुनं वरित्रा बद्ध्यन्तां शुनमुष्ट्रामुदिङ्गय १ शुनासीरामिमां वाचं ज्वषेथां व्यद्दिवि चक्रथुः पयः । तेनेमामपसिञ्चतम् २ अर्वाची सुभगे भव सीतेवन्दामहे त्वा । यथा नः सफलामसि ३ इन्द्रसीतां निगृह्णातु तां पूषा नियच्छतु सानः पयस्वती दुहामुत्तरामुत्तरां समाम् ४ शुनर्नः फला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः । शुनं पर्जन्यो मधुना पयोभिः शुना सीरा शुनमस्मासु धत्तम् ५ सुप्रजस्त्वाय गोमुखः प्रक्रीडयतु कन्या सुमनस्यमाना स्वाहा सहेन्द्राणी कृतमङ्गला इत्यनेन सगीतिनृत्यं कांस्यपात्रं वादयेत् ॥ ऋतुतिथिः । नयामि ॥ ३ ॥ अथालक्ष्मीनिर्णोदनमंत्रः । त्रिकाहोमाख्यः ॥ परिसमूह्य ५ पुरस्तात् ४ आज्यमुत्पूय यैः कैश्चिद्दर्भाग्रैः स्रुवमुन्मुज्यैकदर्मेण वा पृश्न्या पयोसि · आत्मनो० त्रिकाव्रतदेवताभ्य इदमाज्यम० । याज्ञिकस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना तुलवृक्षशाखां सरक्तसूत्रां सावित्राणि० इति बध्वा हस्ते दत्वा या ते अलक्ष्मीः मातृमयी पितृमयी सङ्क्रामणीस हजा वापि काचित्तां तिष्येण सह देवतायाः निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नमः इति शाखाया-मा-त्यात्सर्गः कलशं प्रत्यैशान्यां ॥ तव श्रिये विव्रहीत० २४ ऋचः (पृ० २९–८) स्रुवेण परिते दूळ

भूरथ इत्यक्षोटसहितभाज्यहोमः ॥ विमुच्य नयामि ॥ ४ ॥ अथ द्वादशवर्षोत्तीर्णानां रजोदोषनिवारणार्थं हविष्कल्पम् ॥ परीसमूह्य ९ परिस्तीर्य १६ अर्यम्णे प्रजापतये जुष्टं निर्वपामि । आज्यभागान्तं । प्रधानं । अर्यम्णे स्वाहेति दक्षिणे । प्रजापतये स्वाहेत्युत्तरे । प्रधानान्तरं कुङ्कुमादि स्रुवेण सप्तदशाज्याहुतिर्जुहुयात् ॥ अग्नये सोमाय मित्राय इन्द्राय वरुणाय बृहस्पतये रुद्राय स्कन्दाय वात्सीपुत्राय भगाय भन-नक्षत्रेभ्यः काल्यै पुष्ट्यै भद्रकाल्यै पूष्णे त्वाष्ट्रे महिष्यकाय स्वाहा ॥ १८ ॥ ऋतुतिथिः । विमुच्य ॥ ५ ॥ अथ हविष्पुण्यम् । परिसमूह्य ९ परिस्तीर्य १६ इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै अग्नये जीवपुत्राय प्रजापतये महाराजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्पुण्यदे० जुष्टंतिनिर्वपामि ॥ आज्यभा-गान्तं । या आपो दिव्याः० । प्रधानं ऋतुतिथ्यादि ॥ ६ ॥ अथ कन्याहोमः ॥ परिसमूह्य९ परि स्तीर्य १६ अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्राय राज्ञे प्रजापतये कन्याहोमदेवताभ्यः जुष्टं निर्व-पामि । आज्यभागान्तं । या आपो दिव्याः० । प्रधानं । ऋतुतिथिः । विमुच्य ॥७॥ अथ वरहोमः ॥ परिसमूह्य ९ परिस्तीर्य १६ अग्नये सोमाय मित्राय वरुणाय

इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्राय राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय जुष्टं निर्वपामि ॥ आज्यभागान्तं । या आपो दिव्याः० । प्रधानं । ऋतु-तिथिः । विमुच्य ॥ ८ ॥ अथमहाप्रस्थानम् ॥ उद्वाहपर्यायम् ॥ परिसमूह्य ९ । परिस्तीर्य १६ अक्षतचरुः ॥ अग्नये पुष्टिपतये. प्रजापतये निर्वपामि । आज्यभा-गान्तं [सफलीकृत्योत्भृष्टपिन्नष्टयलङ्कारेण काले सपवित्रे पात्रे सकूर्धपति]चतुस्रोऽष्टौ वाऽविधवाः शाकमिश्रिताभिर्मरिचशर्करादिभिर्भक्ष्यैः साधिताः स्त्रियोन्येनान्नेण च ब्रह्मणायित्वा वीणा गायन्त्यः संगायेयुः । अपि वा चतुरे नर्तनं कुर्यात् ॥ क्रीडं वा शर्धो मारुतमनर्वणं रथे शुभम् । काण्ठा अभि प्रगायत इत्यनया गायत्र्या गणितऋत्विगेवानुमन्त्र-यते ॥ यावत्कन्यासंस्कारहोमांश्चतुष्पदे भद्रपीठे प्राङासीनां कन्यामुपवेशयेत् । कन्या-संस्कारहोमान्तरं वधूर्हस्ते खड्गं संस्थाप्य त्रिरावर्तमग्निं प्रक्रमन्ती रक्षार्थं "पूषा मा" मिति पठति ॥ पूषा मा प्रपथे पातु पूषा मा पशुपा पातु । पूषा माधि-पतिः पातु प्राची दिगग्निर्देवता अग्निं स ऋच्छतु योमैतस्या दिशोभिदासति । इति सर्वदिग्गमनं । एवं । दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु योमैतस्यादिशो भिदासति । प्रतीची दिक्सोमो देवता सोमं स ऋच्छतु यो मैतस्या० । उदीची

दिक्मित्रावरुणो देवता मित्रावरुणौ स ऋच्छतु यो मै० । ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मै० ॥ यन्तिगऽदितिर्देवताऽदित्यं स ऋच्छतु यो मै० ॥ सर्वदिक्षु ॥ ज्योतिषे तन्तव आशिषमाशास्ते सानुमा तनूः ॥ इति प्रास्थानिकमंत्रः । शन्नोदेवी० । उपस्पृश्य (लवदिन्यह) ततोऽक्षतसक्तूनां यागः ॥ प्रधानं । अग्निर्ना रयिं० । १ । प्रजापति० । २ । ऋतुतिथिः । पूर्णां तावत् । अग्नेर्यविष्ट-पूजनं पूर्णां दत्वा । विमुच्य ॥ वैश्वदेवं । स्विष्टकृद्विना । नान्दीमुखश्राद्धं कृत्वा अग्नये स्विष्टकृते स्वाहेति ईशान्यां । आयुः प्रजां । कलशपृच्छां विसर्ज्य । आपन्नोस्मि । उदकलशं । देवततभच्य पूजा अनुमत्यै ७ गन्धपुष्पादि । इति कन्यासंस्कारविधिः ॥

सामग्री । शकुनं ( जंगियोन ) मरिद जलं अक्षतं अक्षोट घृतं यवा अग्निहोत्र वधूवरयोः काष्टपादिका छेट दधि क्षीरं वरि चुच्यवरि भक्तवरि हाभील पशु देवतवारि हन्द वरि कुङ्ग कर्पूर कस्तूरि नन्दीमुखश्राद्धार्थं बधिराः भिय । पिण्डान्तः स्थाप्याः ॥

---

Printed by Ramchandra Yesu Shedge, Nirnaya-Sagar Press, 23 Kolbhat Lane, Bombay, and Published by Keshaobhatta, Patha Shala Teacher, at Nonar, Post Naghushabhag, Srinagar, Kashmir.

प्रथमार्धतो

# वेदकल्पद्रुमः

समाप्तः

---

मिलनेका पत्ता-

पं० केशवभट्ट पाठशालाटीचर मुझा नोनर,

पोष्ट मझशाहीभाग कश्मीर-श्रीनगर । मूल्यं,